

श्रीगणेशायनमः ॥ देव्युवाच ॥ मेरुपृष्ठेसुखासीनं भैरवंपरमेश्वरम् ॥ प्रसन्नवदनंदेवंनागयज्ञोपवीतिनम् ॥ १ ॥ गजचर्मपरीधानंभूतिभूषणविग्रहम् ॥ कपालमालाभरणंगंगावीचिरवा कुलम् ॥ २ ॥ चंद्रार्द्धार्चितमूर्द्धानंसर्पकंकणनूपुरम् ॥ खट्वांगशूलपाशासिविभूषितकरांबुजम् ॥ ॥ ३ ॥ वामांकस्थितगौरीशंदेवगंधर्वसेवितम् ॥ यक्षेंद्रकिन्नरनुतंब्रह्माच्युतनमस्कृतम् ॥ ४ ॥ प्रहसंतं जपंतंच ध्यायंतंच मुहुर्मुहुः ॥ स्मितपूर्वंप्रणम्यादौबद्धांजलिपुटंततः ॥ ५ ॥ उत्थायपार्वतीदेवीभगवंतमभाषत ॥ देव्युवाच भगवंस्त्वं

परोदेवस्त्रैलोक्यप्रभुरीश्वरः ॥ ६ ॥ त्रिगुणात्मागुणातीतश्चित्स्वरूपोनिरंजनः ॥ सकलोनिष्कलोदेवः सत्तारूपोमहेश्वरः ॥ ॥ ७ ॥ त्वंकिंजपसिदेवेशममाप्यावेदितंतुयत् ॥ तत्समाचक्ष्वसकलंयद्यहंतववल्लभा ॥ ८ ॥ भैरव उवाच ॥ एतद्गुह्यतमंलोकेनकस्यकथितंमया ॥ तथापितवदेवेशिभक्त्यागुह्यंवदाम्यहम् ॥९॥ यादेवीलोकमातेतिमहामाहेश्वरीशिवा ॥ प्रत्यंगिरेतिविख्याताषड्विंशतिसुवर्णिका ॥ १० ॥ सृजतेसकलंविश्वंबिभर्तिपरमांबिका ॥ अंतेसहायकर्त्रींचसंहरिष्यतितामसी ॥ ११ ॥ गुणत्रयमयीविद्या महादारिद्र्यवारिणी ॥ तस्याःपंचांगमीशानिपठाम्यहमहर्निशम् ॥ १२ ॥ जपेविद्यांसर्वदैतांवर्मनामसहस्रकम् ॥ स्तवंमंत्रमयंदेविपठामिपरमेश्वरीम् ॥१३॥ तत्प्रसादादहंदेवित्रैलोक्यप्रभुरीश्वरः ॥ भैरवोभैरवादेशःसृष्टिस्थितिलयात्मकः ॥ १४ ॥ देव्युवाच ॥ भगवन्देवदेवेशनिःशेषकरुणाकर ॥ देव्याःप्रत्यंगिरायाश्चपंचागंवक्तुमर्हसि ॥ १५ ॥ भैरवउवाच ॥ पटलंपद्धतिंचैववर्मनामसहस्रकम् ॥ स्तोत्रंमंत्रमयंदेविवक्ष्येलोकहितेच्छया ॥१६॥ अत्रादौपटलंदिव्यंमूलमंत्रमयंपरम् ॥ सयंत्र मंत्रसहितंप्रयोगसहितंशृणु

॥१७॥अथमंत्रोद्धारः॥प्रणवंवाग्भवंमायालक्ष्मीःप्रत्यं
गिरेतिच॥ममरक्षद्वयंदेविममशत्रून्पदंमयि॥१८॥ भ
क्षद्वयंप्रणवंचस्वाहांतोमंत्रउत्तमः ॥ एषाविद्यामया
ख्यातापरमानंददायिनी ॥ १९ ॥ भोगदासुखदादे
विराज्यदाधनदातथा ॥ सिद्धिमोक्षप्रदाविद्यापरासा
युज्यदायिनी ॥ २० ॥ गुरुपादप्रसादेनश्रीविद्यायदि
लभ्यते ॥ विनागुरूपदेशेननान्यत्सिद्ध्यतिपार्वति
॥ २१ ॥ नैः स्वांतरायोनक्लेशोनशौचनियमौपिवा॥
साक्षात्सिद्धिप्रदोदेविमंत्रोयंभोगमोक्षदः ॥ २२ ॥
वर्णलक्षंपुरश्चर्यातदर्द्धंवामहेश्वरि ॥ एकलक्षावधिकु
र्यान्नातोन्यूनंकदाचन ॥ २३ ॥ जपाद्दशांशतोहोम
स्तद्दशांशेनतर्पणम् ॥ मार्जनंतद्दशांशेनतद्दशांशेन
भोजनम् ॥ २४ ॥ वटेरण्येश्मशानेचशून्यागारेचतु
ष्पथे ॥ अर्धरात्रेचमध्याह्नेपुरश्चरणमारभेत् ॥ २५ ॥
जीवहीनोयथादेहःसर्वकर्मसुनक्षमः ॥ पुरश्चरण
हीनोयोनमंत्रःफलदायकः ॥२६॥ मंत्रमुत्कीलयेदा
दौमंत्रंसंजीवयेत्ततः ॥ निष्कौटिल्यंचरेत्पश्चात्ततः
शापहारं जपेत् ॥२७॥ सिद्धमंत्रंजपेच्छुद्धंततःसंपुटि
तंचरेत् ॥ क्रमेणानेनदेवेशि श्रीविद्यांयोजपेत्सुधीः
॥२८॥ससाधकोभवेल्लोकेभोगीसायुज्यमाप्नुयात् ॥

मंत्रस्यास्यमुनिश्चैवमहाभैरवएवच ॥ २९ ॥ अनुष्टु
पछंदइत्युक्तः श्रीमत्प्रत्यंगिरेतिच ॥ देवतास्यापरा
बीजंशक्तिः स्वाहाचकीलकम् ॥ ३० भोगापवर्गसि
द्ध्यर्थंविनियोगइतिस्मृतः ॥ ध्यानमस्याः प्रवक्ष्या
मिसर्वतंत्रेषुगोपितम् ॥ ३१ ॥ आशांबरामुक्तकचा
घनच्छविर्ध्येयासचर्मासिकराहिभूषणा॥दंष्ट्रोग्रवक्त्रा
ग्रसिताहितात्वयाप्रत्यंगिराशंकरतेजसेरिता ॥ ३२ ॥
यंत्रोद्धारंप्रवक्ष्यामिसर्वसिद्धिप्रवर्तकम् ॥ सर्वसंमोह
नंचक्रंसर्वाशापरिपूरकम् ॥ ३३ ॥ बिंदुत्रिकोणं
वसुकोणयुक्तंवृत्ताष्टयंत्रंचत्रिवृत्तयुक्तम् ॥ भूगेह

लक्ष्मीखचितंचसिद्धिदंप्रात्यंगिरंचक्रमेतन्म योक्तम्
॥ ३४ ॥ लयांगमस्यवक्ष्यामियंत्रराजस्यपार्वति ॥
येनश्रवणमात्रेणकोटिपूजाफलंलभे ॥ ३५ ॥ इं
द्राद्यालोकपालाश्चब्रह्मानंतांकिताः प्रिये ॥ वज्रा
दिहेतिसंयुक्ताःपूज्याभूगेहमंडले ॥ ३६ ॥ वाय
व्येशानपर्यंतंदिव्यसिद्धौघमाप्नुयात् ॥ गुरूंश्चपू-
जयेद्देविपंक्तित्रितयमध्यगान् ॥३७॥ ब्राह्म्याद्यामात
रःपूज्याभैरवाष्टकसंयुताः ॥ वामावर्तक्रमेणैवरक्त
पुष्पैर्विशेषतः ॥३८॥ स्तंभिनी मोहिनीचैवक्षोभिणी
द्राविणीतथा ॥ जृंभिणी भ्रामिणीरौद्रीतथासंहारि

णीतिच ॥ ३९ ॥ वसुकोणेपरापूज्यामहाचीनक्रमेक्षुभिः ॥ वामावर्तेनदेवेशिपरमार्थप्रदासदा ॥ ४० ॥ कालीच भद्रकालीचनित्याकालीत्रिकोणगाः ॥ एताःसंपूजनीयास्तुशिवाग्नीवामभागतः ॥४१॥ देवीं रत्नमयींपात्रेसौवर्णेपूजयेत्सुधीः ॥ लयांगमे तदाख्यातंसर्वसिद्धिप्रदंशिवे ॥४२॥ प्रयोगा नष्टवक्ष्येहं शृणुष्वावहिताप्रिये ॥ स्तंभनंमोहनंचैवमारणाकर्षणेततः ॥ ४३ ॥ वशीकरोच्चाटनाख्येशांतिकंपौष्टिकंततः॥एतेषांसाधनंवक्ष्ये मंत्रसिद्धिप्रवर्त्तकम्॥४४॥ येनश्रवणमात्रेण मंत्रःकल्पद्रुमोभवेत् ॥ रवौस्नात्वा-



जपेन्मूलं वटमूलंमहेश्वरि॥४५॥अयुतंतद्दशांशेनहुनेदाज्यंसितांशटीम् ॥ गोधूममधुनालोड्यस्तंभयेद्वादिनांरसान् ॥ ४६ ॥ जलसूर्येंदुवातानांगतिरेषांचकामिनाम् ॥अश्वत्थस्यतलेजप्त्वामूलं विधायथाविधि ॥४७॥ अयुतंतद्दशांशेनजुहुयात्सर्पिरेणजम् ॥ मांसं कणाशटीमिश्रंमोहनंजगतांभवेत् ॥४८॥ कुजेवाशनिवारेवापित्र्यर्क्षेविष्टिसंगमे ॥ गत्वाश्मशानंदेवेशिनत्वादिग्भूतभैरवान् ॥४९॥चितांसंपूज्यवीरेशोजपेदयुतसंख्यया ॥ चिताग्नौजुहुयादाज्यंगुरुपुष्येशतावरीम् ॥५०॥ चंडालकेशनखरदंतमिश्रांचसाधकः॥

तर्प्पयेत्तद्दशांशेनभोजयेत्पात्रपूर्वकम् ॥५१॥ शत्रुर्मृत्युःसामानोपिमृत्युमायातिनान्यथा ॥ करीरमूले गिरिजेजपेन्मूलंशिवं युतम् ॥ ५२ ॥ हुनेदाज्यंवचांशुंठींवानयातिवलासमम् ॥ मेनकापीनवक्षोजास्वस्थाभ्याकर्षिताभवेत् ॥५३॥वानीरमूलेदेवेशि जपेदयुतसंख्यया ॥ हुनेदाज्यंह्यरग्नूतंनागवल्लीदलांकितम् ॥ ५४ भूबिम्बंतर्पयेद्देवींदशांशेनैवसाधक ॥ शक्रोपिदासतांयातिकिंपुनःक्षुद्रमानुषः ॥ ॥ ५५ ॥ क्रूरर्क्षेक्रूरवेलायांजपेत्प्रेतालयेमनुम् ॥ अयुतंतुचितावह्नौहुनेत्सर्पिःकणौषणाम् ॥ ५६ ॥ जातीफलंपलंमैषंखररोमाणिपार्वति ॥ रिपूणां सहसादेविभवदुच्चाटनंपरम् ॥ ५७ ॥ नदीकूलेजपेन्मंत्रमयुतंसाधकोत्तमः ॥ तद्दशांशंहुनेदाज्यंसमृद्वीकंसपायसम् कनकंतगरंराज्ञौतर्पयेत्तद्दशांशतः ॥ अतिवृष्टेरनावृष्टेर्मारीभीतेर्महेश्वरि ॥ ५९ ॥ राजभीतेर्महाव्याघ्रात्सद्यःशांतिःप्रजायते ॥ महापर्वदिनेदेवियत्रतत्र जपेन्मनुम् ॥ ६० ॥ अयुतंतद्दशांशेनजुहुयादाज्यपायसम्॥ शैलंसिंदूरमिश्रंचसपलंसलवंगकम्॥६१॥ ऐणंमांसंशरंमीनंसालंचसकुलत्थकम् ॥ सासवंशुकसद्वीतरजावेत्यंबरान्वितम् ॥ ६२॥ हुत्वाचतर्पयि

त्वाचभोजयित्वाचसाधकान् ॥ पितॄणांदेवतानांच ऋषिणांकुलिनांप्रिये ॥ ६३ ॥ दिव्यकल्पायुतंदेविम हापुष्टिःप्रजायते ॥ सर्वथासर्वदानित्यंमहाविद्यांजपे त्सुधीः ॥ ६४ ॥ दशांशंहोमयेत्तत्रतर्प्पयेत्तद्दशां शतः ॥ भोजयेत्तद्दशांशेनमंत्रीकिंकिंनसाधयेत् ॥ ६५ ॥ मूर्खोवागीशतांयातिनिर्धनोधनवान्भवेत् ॥ महादारिद्र्ययुक्तोपिभवेद्वैश्रवणोपमः ॥ ६६ ॥ इह लोकेभवेद्भोगीपरत्रत्रिदिवंभजेत् ॥ इतीदंमंत्रसर्वस्वं प्रत्यंगिरारहस्यकम् ॥ ६७ ॥ पटलंगुह्यमीशानिगो पनीयंस्वयोनिवत् ॥ इतिश्रीरुद्रयामलेतंत्रेपंचांग खंडेदशविद्यारहस्येप्रत्यंगिरापटलंसमाप्तम् ॥ ॥ ॐ

ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरणौ प्रक्षाल्य निजासने समुपविश्य निजशिरसि श्वेतवर्णसहस्र दलकमलकर्णिकांतर्गतचंद्रमंडलोपरि स्वगुरुं शुक्ल वर्णं शुक्लालंकारभूषितम् ज्ञानानंदमुदितमानसंस चिदानंदविग्रहम् चतुर्भुजं ज्ञानमुद्रापुस्तकवरदा भयकरं त्रिनयनं प्रसन्नवदनेक्षणम् ॥ सर्वदेवंवामां गेवामहस्तधृतकमलया रक्तवसनाभरणयास्वप्रिय या दक्षिणभुजेनालिंगितं परमशिवस्वरूपंध्यात्वा ॥ तच्चरणयुगलकमलविगलदमृतधारयास्वात्मानंप्लुतं

विभाव्य ॥ मानसोपचारैराराध्य ॐ ऐं ह्रीं श्रीं हसखफ्रें हसक्षमलवरयऊं सहखफ्रें सहक्षमलवरयहुंसौः ॥ सौः श्रीमच्छ्रीअमुकानंदनाथश्रीपादुकां पूजयामिनमः ॥ इतिदशधाविमृश्य ॥ दंडप्रणामंमनसाकुर्यात् ॥ तत्र प्रणाममंत्रायथा ॥ नमामिसद्गुरुंशांतंप्रत्यक्षंशिवरूपिणम् ॥ शिरसायोगपीठस्थंमुक्तिकामार्थसिद्धये ॥ श्रीगुरुंपरमानंदंवंदेआनंदविग्रहम् ॥ यस्यसान्निध्यमात्रेणचिदानंदायतेपरम् ॥ अज्ञानतिमिरांधस्यज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितंयेन तस्मैश्रीगुरवेनमः ॥ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुःसाक्षान्महेश्वरः ॥ गुरुरेवजगत्सर्वंतस्मैश्रीगुरवेनमः ॥ इतिप्रणाममंत्रान्पठित्वाऽन्यांश्चपठेत् ॥ नमस्तेनाथभगवन्शिवायगुरुरूपिणे ॥ विद्यावतारसंसिद्ध्यैस्वीकृतानेकविग्रहः ॥ नवायनवरूपायपरमार्थैकरूपिणे ॥ सर्वाज्ञानतमोभेदभानवेचिद्घनायते ॥ स्वतंत्रायदयाक्लृप्तविग्रहायपरात्मने ॥ परतंत्रायभक्तानांभव्यानांभव्यरूपिणे ॥ ज्ञानिनांज्ञानरूपायप्रकाशायप्रकाशिनाम् ॥ विवेकिनांविवेकायविमर्शायविमर्शिनाम् ॥ पुरस्तात्पार्श्वयोःपृष्ठेनमस्कुर्यादुपर्यधः ॥ सदामच्चित्त

रूपेणविधेहिभवदासनम् ॥ इतिगुरुंप्रणम्य ॥ सुप्रसन्नंविभाव्यमनसातदाज्ञांगृहीत्वा ॥ मूलाधारेस्वर्णचतुर्दलकमलकर्णिकांतर्गतत्रिकोणचक्रशृंगाटकोपपरिपरां शक्तिं कुंडलिनीमुद्यद्दिनकरसहस्रभास्वरां विद्युत्कोटिसन्निभाम् ॥ सकलमंत्रमातरंसर्वप्राणिजीवात्रिधमधामानम्॥सर्पाकारामूर्ध्वमुखींसार्धत्रिवलयाम् ॥ बिसतंतुतनीयसींसुप्तांविभाव्य ॥ गुरूपदिष्टनिजसहजनादेनबोधयित्वा ॥ तत्र ॥ वंनमः ॥ शंनमः ॥ षंनमः संनमः ॥ इतिपत्रेषुमध्येमूलेनचप्रादक्षिण्येनसंपूज्यहंसइतिमंत्रेणसर्वतःसंस्थाप्य ॥ ततोविद्रुमवर्णेषड्दलेस्वाधिष्ठाने लिंगमूलेतांनीत्वा ॥ तत्र ॥ बंनमः ॥ भंनमः॥ मंनमः ॥ यंनमः ॥ रंनमः ॥ लंनमः ॥ इतिपत्रेषुमध्येमूलेनचसंपूज्य ॥ ततोमणिपूरके नाभौनीलवर्णेदशदलकमलेतांनीत्वा ॥ तत्र ॥ डंनमः ॥ ढंनमः ॥ णंनमः ॥ तंनमः थंनमः ॥ दंनमः ॥ धंनमः ॥ नंनमः ॥ पंनमः ॥ फंनमः ॥ इतिपत्रेषुमध्येमूलेनचप्रपूज्य ॥ ततोवक्षस्यनाहतेपिंगलवर्णेद्वादशदलकमलेतांनीत्वा ॥ तत्र ॥ कंनमः ॥ खंनमः ॥ गंनमः घंनमः ॥ ङंनमः ॥

चंनमः ॥ छंनमः जंनमः ॥ झंनमः ॥ ञंनमः ॥ टंनमः ॥ ठंनमः ॥ इतिपत्रेषुमध्येमूलेनचसंपूज्य ॥ तेजोविशुद्धौ ॥ कंठेधूम्रवर्णे षोडशदलकमलेतां नीत्वा ॥ तत्र ॥ अंनमः आंनमः ॥ इंनमः ॥ ईंनमः ॥ उंनमः ॥ ऊंनमः ॥ ऋंनमः ॥ ॠंनमः ॥ ऌंनमः ॥ ॡंनमः ॥ एंनमः ॥ ऐंनमः ॥ ओंनमः औंनमः ॥ अंनमः अःनमः ॥ इतिपत्रेषुमध्येमूलेनसंपूज्य ॥ ततः सहस्रदलकमलकर्णिकांतर्गतबिंदुरूपतेजोमय परमशिवेनसहैकतांनीत्वा ॥ तेनामृतेनततः स्रवतासंतर्प्यतत्रनादश्रवणतत्परोमुहूर्तंलयंविभाव्य- ॥ पुनरपितथैवाज्ञाचक्रादिक्रमेणतेषुतत्कमलेषुतैस्तै रक्षरैःसंपूज्य ॥ अवरोहेमि मंत्रेणकमलात्कमलम परोह्य ॥ पुनरपिमूलाधारे स्वस्थाने स्थापयेदित्या- रोहावरोहक्रमेण परांदेवींकुंडलिनींध्यात्वा ॥ प्राणा यामऋष्यादिकरषडंगन्यासध्यानानिवक्ष्यमाणक्र मेणकृत्वा ॥ यथाशक्तिजपंविधाय ॥ पुनरपि ॥ प्राणायामादिनाजपसमर्प्य ॥ नित्यकृत्यंसमर्पये ॥ प्रातःप्रभृतिसायांतंसायादिप्रातरंतत ॥ यत्करोमि जगद्योनेतदस्तुतवपूजनम् ॥ इतिसमर्प्यस्वकार्यानु ष्ठानाय ॥ त्रैलोक्यचैत न्यमयेसुरेशिप्रत्यंगिरेत्वच्च

रणाज्ञयैव ॥ प्रातः समुत्थायतवप्रियार्थंसंसारयात्राम नुवर्तयिष्ये ॥ संसारयात्रामनुवर्तमानंत्वदाज्ञयाश्री परमेशिदेवि॥ स्पर्धातिरस्कारकलिप्रमादभयानिमां माभिभवंतुमातः ॥ जानामिधर्मंनचमेप्रवृत्ति र्जानाम्यधर्मंनचमेनिवृत्तिः ॥ त्वयाहृषीकेशहृ दिस्थयाहंयथानियुक्तोस्मितथाचरामि ॥ इतिदेव्या ज्ञांप्रार्थ्य ॥ अजपाजपंसहजसिद्धंतत्तद्देवताभ्यःसंक ल्पसमर्पयेत् ॥ ओंअद्यपूर्वेद्युरहोरात्राचरितमुच्छ्व वासनिःश्वासात्मकंषट्शताधिकसैकविंशतिसहस्रसं ख्याकमजपाजपमहंकरिष्ये ॥ इतिसंकल्प्यसमर्प्प येत् ॥ ओंऐंह्रींश्रींमूलाधारचक्रस्थायगणपतये अजपाजपानां षट्शतम् ६०० समर्प्पयामि नमः ॥ ओंऐंह्रींश्रींस्वाधिष्ठानचस्थाय ब्रह्मणे अज पाजपानां षट्सहस्राणि ६००० समर्प्पयामि नमः॥ ओंऐंह्रींश्रींमणिपूरचक्रस्थायविष्णवेअजपाजपानां षट्सहस्राणि ६००० समर्पयामिनमः ॥ ॐऐंह्रीं श्रींअनाहतचक्रस्थायरुद्रायअजपाजपानांषट्सहस्रा णि ६००० समर्प्पयामिनमः ॥ ॐऐंह्रींश्रींविशुद्ध चक्रस्थायजीवात्मनेअजपाजपानांसहस्रं१०००सम र्प्पयामिनमः ॥ ॐ ऐंह्रींश्रींआज्ञाचक्रस्थायपरमा

१० त्मनेअजपाजपानां सहस्रम् १००० समर्प्पयामिन
११ मः ॥ ॐ ऐं-ह्रींश्रींसहस्रदलकमलकर्णिकामध्यस्था
यैश्रीगुरुपादुकायै अजपाजपानांसहस्रंसमर्प्पयामि
नमः ॥ इत्यजपाजपंसमर्प्य ॥ अजपामन्त्रेणप्राणा
यामंकृत्वा ॥ हंसात्मनेऋषयेनमः शिरसि ॥ अव्य
क्तगायत्रीछंदसेनमः मुखे ॥ परमहंसायदेवतायै
नमःहृहये ॥ ॐ ऐंह्रींश्रीं सःशक्तयेनमः पादयोः ॥
ॐऐंह्रींश्रींसोहंकीलकायनमःनाभौ ॥ ॐऐंह्रींश्रींओं
कारतत्त्वायनमःहृदये ॥ ॐऐंह्रींश्रींउदात्तस्वराय
नमःकंठे ॥ ॐऐंह्रींश्रींनभसेस्थानायनमःमूर्ध्नि ॥ ॐ



ऐंह्रींश्रींहैमायवर्णायनमः सर्वांगे ॥ इतिविन्यस्य ॥
ममोक्षार्थेजपेविनियोगः ॥ इतिकृतांजलिर्वदेत् ॥
ततः।ॐऐंह्रींश्रीं ह्सांसूर्यात्मनेस्वाहाअंगुष्ठाभ्यांनमः॥
ॐऐंह्रींश्रींह्सींसोमात्मनेस्वाहातर्जनीभ्यां नमः ॥
ॐ ऐंह्रींश्रींह्सूंनिरंजनात्मनेस्वाहामध्यमाभ्यां ॥ ॐ
ऐंह्रींश्रींह्सैंनिराभासात्मने स्वाहाअनामिकाभ्यांन
मः॥ ॐऐं-ह्रींश्रींह्सौंकनिष्ठतनुःसूक्ष्मादेवीप्रचोदया
त्स्वाहा ॥ कनिष्ठिकाभ्यांनमः॥ ॐऐं-ह्रींश्रींह्सः ॥
अव्यक्तबोधात्मनेस्वाहाकरतलकरपृष्टाभ्यांनमः ॥
इतिकरन्यासः ॥ अथषडंगन्यासः ॥ ॐऐं-ह्रींश्रीं

ह्सांसूर्यात्मनेस्वाहाहृदयायनमः ॥ ॐऐंह्रींश्रींह्सीं सोमात्मनेस्वाहाशिरसेस्वाहा ॥ ॐऐंह्रींश्रींह्सूंनिरं जनात्मनेस्वाहाशिखायैवषट् ॥ ॐऐंह्रींश्रींह्सैंनि राभासात्मनेस्वाहाकवचायहुं ॥ ॐऐंह्रींश्री ह्सैंकनिष्ठतनुः सूक्ष्मादेवीप्रचोदयात्स्वाहानेत्रत्रयाय वौषट् ॥ ॐऐंह्रींश्रींह्सः ॥ अव्यक्तबोधात्मनेस्वा हाअस्त्रायफट् ॥ इतिकरयोर्विन्यस्य ॥ हृद्यप्येतानेव मंत्रान्विन्यस्यध्यानंकुर्यात् ॥ धांमूर्धानं यस्यविप्रा वदंतिखंवैनाभिंचंद्रसूर्यौचनेत्रे ॥ दिग्भिःश्रोत्रेयस्य पादौक्षितिश्चध्यातव्योसौसर्वभूतांतरात्मा ॥ इतिवि राट्स्वरूपं स्वात्मानंध्यात्वा ॥ तदनुसंधायिप्राणवा योर्निर्गमप्रवेशात्मकमजयामंत्रं ॥ हंसः ॥ पंचविंश तिवारंजप्त्वासमर्प्य ॥ गुरूपदिष्टमार्गेणनादानुसंधा नपूर्वकंनिरस्तसमस्तोपाधिना ॥ केनापिचिद्विलासे नप्रवर्तमानोस्मीतिविभाव्यस्वकार्यानुष्ठानाय ॥ स मुद्रमेखलेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तु भ्यंपादस्पर्शंक्षमस्वमे ॥ इतिभूमिंप्रार्थ्यश्वासानुसारे णतस्यांपादंनिधाय ॥ नद्यादौगत्वावैदिकंस्नानंनि वर्त्य ॥ तांत्रिकमारभेत् ॥ तत्रादौ ॥मूलमात्मतत्त्वा यस्वाहा ॥ मूलविद्यातत्त्वायस्वाहा ॥ मूलशिवत

त्वायस्वाहा॥ अथ वा॥ॐ ह्रींस्वाहा॥ इत्याचम्य ॥ मूलंस्मरन् ॥ मलापकर्षणस्नानंविधायपुराचम्य॥ ॐ अद्यामुकमासस्यामुकपक्षस्यातिथावमुकायाम्॥ अमुकक्षेत्रे अमुकशर्माहं श्रीकुलदेवताप्रीतयेतांत्रिकविधिनास्नानमहंकरिष्येइतिसंकल्पंकृत्वा ॥ जलेत्रिकोणचक्रंविलिख्य॥ सूर्यमंडलात् गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिंकुरु॥ इतिअंकुशमुद्रयातीर्थमावाह्य॥ पुरःकल्पिततीर्थेसंयोज्य ॥ आचम्य ॥ स्वात्मानंपोक्ष्यमूलेनमृत्तिकयास्नपनंविधाय ॥ मूलंपठन् ॥ कुंभमुद्रयाहितांस्वदेवतांत्रिभिरभिषिच्य ॥ श्रवणादिसप्तच्छिद्राणि रुध्य ॥ त्रिर्निमज्ज्योन्मज्जेत ॥ इतिस्नानविधिः ॥ अथसंध्या ॥ पूर्ववदाचम्य ॥ स्वमूलप्राणायामः ॥ ऋष्यादिकरषडंगंविधाय ॥ पूर्ववत्तीर्थमावाह्य ॥ वामहस्तेतज्जलंनिधाय ॥ दक्षहस्तेनाच्छाद्य ॥ लंवंरंयंहं ॥ इतित्रिरभिमंत्र्यमूलमुच्चरंस्तत्त्वमुद्रया मूर्ध्निसप्तधामूलेनचत्रिधाभ्युक्ष्य ॥ शेषजलंदक्षहस्तेसमाधायतेजोरूपंध्यात्वा इडयादेहांतःपापंप्रक्षाल्य ॥ कृष्णवर्णंतज्जलंपापरूपंपिंगलयाविरिच्य ॥ पुरःकल्पितवज्रशिलायांफडितिनिक्षिपेत् ॥ ततोऽर्घ्यं

विधाय ॥ ओंह्रांह्रींहंसः श्रीमार्तंडभैरवायप्रकाशशक्तिसहिताय इदमर्घ्यं परिकल्पयामिस्वाहा इति त्रिरर्घ्यंकुलसूर्य्यायदत्वा ॥ हृत्पद्मात्सूर्यमंडलेमूलदेवींनीत्वा तत्र विधिवद्ध्यात्वा ॥ ॐ प्रत्यंगिरायै विद्महेशत्रुनिषूदिन्यैधीमहितन्नोदेवीप्रचोदयात् ॥ इति मूलगायत्री ॥ अनया चतसृषु संध्यासुसूर्यमंडलेमूलदेव्यैअर्घ्यंदत्त्वा ॥ यथाशक्तिजपेत् ॥ चतसृषुसंध्यासुक्रमशोमूलाधारहृत्कमलभ्रूमध्यब्रह्मरंध्रेभ्योदेवीतेजःसमाकृष्य ॥ इडयाविरेच्यकलितवह्निसूर्यचंद्रतारामंडलेषुनिक्षिप्य ॥ ततःदेवींध्यात्वा ॥ स्वस्वगायत्र्यार्घ्यंदत्वा ॥ यथाशक्तिस्वस्वगायत्रींजप्त्वा ॥ पुनर्मूलगायत्रींचजप्त्वा ॥ स्वस्वबीजाक्षरं सर्वंमूलंचजप्त्वा ॥ प्राणायामादिनाजपंसमर्प्यमंडलेभ्योदेवीतेजः ॥ ॥ स्वस्वस्थानेदेवींच हृदि आनीयध्यायेदितिसंध्याविधि ॥ ततस्तर्पणम् ॥ पूर्ववदाचम्यप्राणायामादिकृत्वा ॥ तीर्थमावाह्य ॥ मूलेनजलंसप्तधाऽमृतमुद्रयाऽमृतीकृत्य ॥ तत्रजलेयंत्रंध्यात्वा॥ तत्रदेवींहृदयात्सपरिवारामानीयषडंगयोगेनसकलीकृत्य॥कुंडलिन्याःप्रयोगेनामृतेनाभिषिच्य॥ विधिवत्प्रपूज्य ॥ ऐशान्याम्॥ऐंश्रींश्रीअमुकानंदनाथभैरव

स्तृप्यतामिति त्रिः संतर्प्य ॥ वह्नौपरमगुरुश्री
पादुकां तर्पयामि ॥ नैरृत्यांपरमाचार्यगुरु
श्रीपादुकांतर्प्पयामि ॥ वायव्ये ॥ परमेष्ठिगुरुश्री
पादुकांतर्प्पयामि इतित्रिःसकृद्वासंतर्प्य ॥ दिव्य
सिद्धमानवौघानपिगुरून्संतर्प्य जलेयंत्र विभा
व्य ॥ मूलभैरवसहितेप्रत्यंगिरितृप्यतामिति
त्रिःसंतर्प्य ॥ परिवारानपिसंतर्प्य ॥ प्राणाया
मादिविधाय ॥ देवींस्वहृदिविसृजेदिति ॥ ती
र्थंचविसृजेत्स्वस्थानेइतितर्प्पणम् ॥ ततोगृहमा
गत्य ॥ जलादिनाद्वारदेवताः पूजयेत् ॥ ॐ
धात्र्यैनमः ॥ विंविधात्र्यैनमःदक्षे ॥ गंगंगा
यैनमः ॥ यंयमुनायैनमःवामे ॥ द्वारश्रियैनमः
देहल्यैनमःऊर्ध्वे ॥ वास्तुपुरुषायनमः ॥ ॥ अधः
॥ इतिसंपूज्य ॥ वीरासनेनोपविश्य ॥ पृ
थ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वं
चधारयमांदेविपवित्रंकुरुचासनम् ॥ इतिपृथ्वीं
प्रार्थ्य ॥ संविदंयथामंत्रंस्वाकुर्यात् ॥ तद्विधि
र्यथा ॥ संविदब्रह्मसंभूतेब्रह्मपुत्रिसदानघे ॥ ब्रा
ह्मणानांचतृप्त्यर्थंपवित्राभवसर्वदा ॥ ॐब्राह्म
ण्यैनमःस्वाहा ॥ सिद्धिमूलक्षयेदेविहीनबोधप्र

बोधिनि ॥ राजाप्रजावशंकरिशत्रुपक्षनिषूदिनि ॥ ऐंक्षत्रियायैनमःस्वाहा ॥ अज्ञानेंधनदीप्ताग्नौज्ञानाग्निब्रह्मरूपिणी ॥ आनंदस्याहुतिप्रीतिंसम्यग्ज्ञानंप्रयच्छमे ॥ ह्रींवैश्यायैनमःस्वाहा ॥ नमस्यामिनमस्यामियोगमार्गप्रदर्शिनि ॥ त्रैलोक्यविजयेमातःसमाधिफलदाभव ॥ क्लींशूद्रायैनमःस्वाहा ॥ इतिअभिमंत्र्य ॐअमृतेअमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षयाकर्षयसिद्धिंदेहिदेहि ॥ अमुकपदंमेवशमानयस्वाहेतितदुपरि सप्तधामूलंचजप्त्वा ॥ धेनुमुद्रयामृतीकृत्यावाहनादिमुद्राःसंदर्श्य ॥ छोटिकाभिर्दिग्बंधंविधाय ॥ ऐंवदवदवाग्वादिनीममजिह्वाग्रेस्थिरीभव ॥ सर्वसत्त्ववशंकरीस्वाहा ॥ इत्यनेनमुखेजुहुयात् ॥ ततआनंदमयोभूत्वाअपसर्पंतुतेभूतायेभूताभुविसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ पाखंडकारिणोभूत्वाभूताभूम्यंतरिक्षगाः॥दिविलोकेस्थितायेचतेनश्यंतुशिवाज्ञया ॥ इतितर्जनीमध्यमाभ्यामूर्ध्वोर्ध्वंतालत्रयदानेन ॥ वामपार्ष्णिघातत्रयेण दिव्यदृष्ट्या च त्रिविधान्विघ्नानुत्सार्य्य ॥ छोटिकाभिर्दशदिग्बंधंकृत्वा ॥ चतुर्दिक्षु वह्निप्राकारंसंचिंत्यप्राणा

यामंकुर्यात् ॥ तत्रप्रणवंषोडशवारमुच्चरन् ॥ दक्षांगु
ष्ठेनदक्षनासापुटंनिरुद्ध्यवामेनपवनंपूरयेत् ॥ ततस्त
मेवचतुष्षष्टिवारमुच्चरन् ॥ दक्षानामाकनिष्ठाभ्यांवा
मंपुटंचनिरुध्य ॥ द्वाभ्यांपवनंकुंभयेत् ॥ ततस्तमेव
द्वात्रिंशद्वारमुच्चरन् वामंपुटंतथैवनिरुध्य ॥ दक्षेनपव
नंरेचयेदित्येकः प्राणायामः ॥ एषएवविपर्ययेणद्वि
तीयः ॥ प्रथमवत्तृतीयः ॥ इत्थंप्राणायामेननिरस्तस
कलकलुषंस्वदेहंदेवताराधनयोग्यंविभाव्य भूतशुद्धिं
कुर्यात् ॥ अथमूलाधारेहंसइतिमंत्रेणकुंडलिनींपृथ्वी
सहस्वाधिष्ठानेआनीय ॥ तत्रचपृथ्वींजलेलीनांविभा
व्य ॥ तस्माज्जलेनसहमणिपूरेसमानीयतत्रवह्नौजलं
लीनंविचिंत्य ॥ तस्माद्वह्निनासहानाहतेसमानीय ॥
तत्रवायौवह्निंलीनंविचिंत्य ॥ तस्माद्वायुनासहविशु
द्धेसमानीय ॥तत्रस्थाकाशेवायुंलीनंविचिंत्य तस्मा
दाकाशेनसहआज्ञाचक्रेसमानीय ॥ तत्रस्थमनस्या
काशंलीनंसंचिंत्यमनोनादेलीनंविभाव्य ॥ ध्वनौ
ध्वनिंसमर्प्य ॥ सहस्रदलकमलकर्णिकांतस्थचंद्रमं
डलमध्यगतेत्रिकोणांतर्गततेजोमयबिंदुरूपपरमशि
वेतंसमर्प्य ॥ प्राणायामविधिना यामिति वायुबीजं
धूम्रवर्णं षोडशधा जपन् शरीरेववामकुक्षिस्थितंपाप

पुरुषं कज्जलप्रभम्ब्रह्महत्याशिरस्कंचस्वर्णस्तेयभुज
द्वयम्॥सुरापानहृदायुक्तंगुरुतल्पकटिद्वयम्। तत्संसर्ग
पदद्वंद्वमंगप्रत्यंगपातकम् ॥उपपातकरोमाणंरक्तश्म
श्रुविलोचनम् ॥खड्गचर्मधरंक्रुद्धंपुण्यंपापंविचिंत्यता
म्॥ संशोष्यरमितिवह्निबीजंरक्तवर्णचतुष्पष्टिवारंजपं
स्तमेवसंदह्यवमितिसुधाबीजंशुक्लवर्णंसहस्रारेविचिंत्य
द्वात्रिंशद्वारंजपंस्तद्भवामृतवृष्ट्यानिष्पापं शरीरमुत्पा
द्य ॥ ललाटस्थलमितिपृथ्वीबीजेनपीतवर्णेनषोडश
धाजप्तेन सुदृढीकृत्य ह्रीमिति षोडशधाजप्तेन सूल
स्थेन साकाशक्तिबीजेनऐश्वर्यंदेहंविधाय ॥ सोहमि



तिमंत्रेणकुंडलिनीममृतलोलीभूतां पंचभूतानि जी
वात्मानंचब्रह्मपथेनस्वस्वस्थाने नियोजयेत्॥ ततोदे
वीरूपमात्मानंविचिंत्य ॥ हृदिदक्षहस्तंनिधाय ॥
प्राणप्रतिष्ठांकुर्यात् ॥ ॐ आं ह्रींक्रौंयंरंलंवंशंषंसं
हंक्षंह्सौः हंसः श्रीप्रत्यत्यंगिरायाः प्राणाइहप्राणाः॥ ॐ
आं ह्रींक्रोंयंरंलंवंशंषंसंहंलंक्षंह्सौः श्रीप्रत्यंगिरायाः
जीवइहस्थितः॥ॐ आं ह्रींक्रोंयंरंलंवंशंषंसंळंक्षंह्सौं
हंसः सर्वेंद्रियाणिइहास्थितानि ॐ आं ह्रींक्रोंयंरंलंवं
शंषंसंहंळंक्षंह्सौंहंसः॥वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्रा
णप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा॥ इतिप्राणप्रति

ष्ठांविधाय ॥ स्वमूलेनऋष्यादिस्मरणंविदधीत तद्य
था ॥ अस्यश्रीप्रत्यंगिरामहामंत्रस्यभैरवऋषिः ॥
अनुष्टुप्छंदः ॥ श्रीप्रत्यंगिरादेवता ॥ ह्रींबीजं ॥
श्रींशक्तिःस्वाहाकीलकंविद्यासिद्ध्यर्थेजपेविनियोगः
इतिकृतांजलिःस्मृत्वा ॥ यथाविधिन्यसेत् ॥ भैरव
ऋषयेनमः ॥ शिरसि ॥ अनुष्टुप्छंदसेनमः मुखे॥
श्रीप्रत्यंगिरादेवतायैनमः हृदि॥ह्रींबीजायनमःगुह्ये
श्रींशक्तयेनमःपादयोः॥स्वाहाकीलकायनमःनाभौ॥
ममश्रीधर्मार्थकाममोक्षार्थेजपेविनियोगःसर्वांगे॥इति
ऋष्यादिस्मरणम्॥ऐंनमः नाभ्यादिपादांतं ह्रींनमःकं
ठादिनाभ्यंतम् ॥ श्रींनमःमूर्धादिकंठांतम् ॥ ऐंनमः
वामपाणितले ॥ ह्रींनमः दक्षपाणितले ॥ श्रींनमः
उभयोः ॥ अथस्वमूलकरन्यासः ॥ ॐ ऐंअंगुष्ठा
भ्यांनमः ॥ ॐ ह्रींतर्जनीभ्यांनमः ॥ ॐ श्रींमध्य
माभ्यांनमः ॥ प्रत्यंगिरेअनामिकाभ्यांनमः ॥ ममर
क्षरक्षकनिष्ठिकाभ्यांनमः॥ममशत्रूणांभक्षभक्षॐस्वा
हाकरतलकरपृष्ठाभ्यांनमः॥इतिकरन्यासः॥अथ षडं
गन्यासः ॥ ॐ ऐंहृदयायनमः ॥ ह्रींशिरसेस्वाहा॥
श्रींशिखायैवषट् ॥ प्रत्यंगिरेकवचायहुम् ॥ म
मरक्षरक्षनेत्रत्रयायवौषट् ॥ ममशत्रूणांभक्षभक्ष

ॐस्वाहाअस्त्रायफट्इतिषडंगन्यासः ॥ अथमा
तृकान्यासः ॥ ॐअस्यश्रीअंतर्मातृकान्यास
स्य ब्रह्माऋषिः गायत्रंछंदःश्रीमातृकासरस्व
तीदेवता ॥ हलोबीजानि ॥ स्वराःशक्तयः ॥
अव्यक्तं कीलकं ममश्रीप्रत्यंगिरात्वेनन्या
सेविनियोगः ॥ इतिप्रांजलिःस्मृत्वान्यसेत् ॥
ब्रह्मऋषयेनमः शिरसि ॥ गायत्रीछंदसेनमः मु
खे ॥ श्रीअंतर्मातकादेवतायैनमः हृदये ॥ ह
लोबीजेभ्योनमः गुह्ये ॥ स्वराःशक्तिभ्योनमःपाद
योः ॥ अव्यक्तंकीलकायनमः नाभौ ॥ मम श्रीप्र
त्यंगिरात्वेनन्यासेविनियोगः इतिसर्वांग ॥ अथ
मातृकाकरन्यासः ॥ ॐऐंह्रीं श्रीं अंकंखंगंघंङं
आंअंगुष्ठाभ्यांनमः ॥ ॐ ऐंह्रीं श्रींइंचंछंजं झंईंतर्ज
नीभ्यांनमः ॥ ॐऐंह्रीं श्रीं उंटंठंडंढंणंऊंमध्यमा
भ्यांनमः ॥ ॐऐंह्रीं श्रींएंतंथंदंधंनंऐं अनामिकाभ्यां
नमः ॥ ॐऐंह्रीं श्रींओंपंफंबंभंमंऔं कनिष्ठिकाभ्यां
नमः ॥ ॐऐंह्रीं श्रींअंयंरंलंवंशंषंसंहंलंक्षं अः कर
तलकरपृष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥ अथषडं
गन्यासः॥ ॐऐंह्रीश्रींअंकंखंगंघंङंआंहृदयायनमः
॥ ॐ ऐंह्रीं श्रींइंचंछंजंझंञंईंशिरसेस्वाहा ॥ ॐऐंह्रीं

२०

श्रीउंटंठंडंढंणंऊंशिखायैवषट् ॥ ॐऐंह्रींश्रींएंतंथंदं धंनंऐंकवचायहुं ॥ ॐऐंह्रींश्रीओंपंफंबंभंमंऔं नेत्रत्र यायवौषट् ॐऐंह्रींश्रींअंयंरंलंवंशंषंसंहंक्षंअः अस्त्रा यफट्इतिकरयोः रंअंगुष्टादितलांतं विन्यस्य ॥ हृदयादिषडंगेष्वपिन्यसेत् ॥ ततोंतर्मातृकान्यासः ॥

२१

अंनमः आंनमः इंनमः ईंनमः उंनमः ऊंनमः ऋंनमः ॠंनमः ऌंनमः ॡंनमः एंनमः ऐंनमः ओंनमः औंनमः अंनमः अःनमः इति कंठेषोड शदले ॥ कंनमः खंनमः गंनमः घंनमः ङंनमः चंनमः छंनम जंनमः झंनमः ञंनमः टंनमःठंनमः इत्यनाहतेद्वादशदले ॥ डंनमः ढंनमः णंनमः तंनमः थंनमः दंनमः धंनमः नंनमः पंनमः फंनमः मः इति नाभौदशदले ॥ बंनमः भंनमः संनमः यंनमः रंनमः लंनमः इति लिंगमूलेषड्दले ॥ वं नमः शंनमः षंनमः संनमः इति मूलाधारे चतुर्द ले ॥ हंनमः क्षंनमः इति भ्रूमध्येद्विदले ॥ इत्यंत र्मातृकावदेव ॥ न्यासस्तु ॐऐंह्रींश्रींअंनमः शिर सि ॥ॐऐंह्रींश्रींआंनमः मुखवृत्ते ॥ ॐऐंह्रींइंनमः दक्षनेत्रे ॥ ॐऐंह्रींश्रींईंनमः वामनेत्रे ॥ ॐऐंह्रीं उंनमः दक्षकर्णे ॥ ॐऐंह्रींश्रींऊंनमः वामकर्णे ॥

२० ॐऐंह्रींश्रींऋंनमः ॥ दक्षनासे ॐऐंह्रींश्रींॠंनमः वामनासे ॥ ॐऐंह्रींश्रींऌंनमः दक्षगंडे ॥ ॐऐंह्रीं
२२ श्रींएंनमः ऊर्ध्वोष्ठे ॥ ॐऐंह्रींश्रींऐंनमः अधरोष्ठे ॥ ॐऐंह्रींश्रीं: ओंनमः ऊर्ध्वदंतपंक्तौ ॥ ॐऐंह्रींश्रींऔं नमः अधोदंतपंक्तौ ॥ ॐऐंह्रींश्रींअंनमः मूर्ध्नि ॥ ॐऐंह्रींश्रींअः नमः अस्थ्नि ॥ ॐऐंह्रींश्रींकंनमःद क्षबाहुमूले ॥ ॐऐंह्रींश्रींखंनमः कूर्प्परे ॥ ॐऐंह्रीं श्रींगंनमः मणिबंधे ॥ ॐ ऐंह्रींश्रींघंनमः दक्षहस्तां
२१ गुलिमूले ॐ ऐंह्रींश्रींङंनमः दक्षहस्तांगुल्यग्रे ॥ ॐ ऐंह्रींश्रींचंनमः वामबाहुमूले ॐ ऐंह्रींश्रींछंनमःकू र्प्परे ॐ ऐंह्रींश्रींजंनमः मणिबंधे ॐ ऐंह्रींश्रींझंनमः वामहस्तांगुलिमूले ॐ ऐंह्रींश्रींञंनमः वामहस्तांगु ल्यग्रे ॐ ऐंह्रींश्रींटंनमः दक्षपादमूले ॐ ऐंह्रींश्रीं ठंनमः जानुनि ॐ ऐंह्रींश्रींडंनमः गुल्फे ऐंह्रींश्रीं ढंनमः दक्षपादांगुलिमूले ॐ ऐंह्रींश्रींणंनमः दक्षपा दांगुल्यग्रे ॐ ऐंह्रींश्रींतंनमः वामपादमूले ॐ ऐंह्रीं श्रींथंनमः जानुनि ॥ ॐ ऐंह्रींश्रींदंनमः गुल्फे ॐ ऐंह्रींश्रींधंनमः वामदांगुलिमूले ॥ ॐऐंह्रींश्रींनंनमः वामपादांगुल्यग्रे ॥ ॐ ऐंह्रींश्रींपंनमः दक्षपार्श्वे ॐ

१० ऐंह्रींश्रींफंनमः वामपार्श्वे ॐ ऐंह्रींश्रींबंनमः पृष्ठे ॐ ऐंह्रींश्रींभंनमः नाभौ ॥ ॐ ऐंह्रींश्रींमंनमः उदरे ॐ ऐंह्रींश्रींयंत्वगात्मनेनमः वामांसे ॥ ॐ ऐंह्रीं श्रींरंअसृगात्मनेनमः ॥ दक्षांसे ॥ ॐ ऐंह्रींश्रीं लंमांसात्मनेनमः ककुदि ॥ ॐ ऐंह्रींश्रींवंमेदआ त्मनेनमः हृदादिदक्षकरांतम् ॥ ॐऐंह्रींश्रींशंअ स्थ्यात्मनेनमः हृदादिदक्षकरांतम् ॥ ॐऐंह्रींश्रींषं मज्ञात्मनेनमः हृदादिवामकरांतम् ॥ ॐ ऐंह्रीं श्रीं संशुक्रात्मनेनमः हृदादिदक्षपादांतम् ॥ ॐ ऐंह्रींश्रीं हंप्राणात्मनेनमः हृदादिवामपदांतम् ॥ ॐ ऐंह्रीं श्रींलंजीवात्मनेनमः पादादिहृदंतम् ॥ ॐ ऐंह्रींश्रीं क्षंपरमात्मनेनमः हृदादिमूर्धांतम् ॥ इतिविन्यस्य पंचाशद्वर्ण रूपांचकपर्दशशिभूषणाम् ॥ शुद्धस्फटि कसंकाशांशुद्धक्षौमविराजितां॥ मुक्तारत्नस्फुरद्भूषां जपमालांकमंडलुं ॥ पुस्तकंवरदानंचबिभ्रतींपरमे श्वरीम् ॥ एवंध्यात्वामातृकान्यस्यविद्या न्यासंकु र्यात्तयथाऐंनमःमणिबंधेह्रींनमःतले श्रींनमःअग्रेइ तिदक्षकरे ॥ ऐंनमःमणिबंधेह्रीं नमः तलेश्रींनमः अग्रेइतिवामकरे ॥ ऐंनमः दक्षकक्ष्ये ॥ ह्रींनमः दक्ष कूर्परे ॥ श्रींनमः दक्षपाणौ ऐंनमःवामकक्ष्ये ॥ ह्रीं

श्लो० २३ २४

नमः वामकूर्परे श्रींनमः वामपाणौ ॥ ऐंनमः दक्षपादकक्ष्ये ह्लींनमः जानुनि ॥ श्रींनमः पादाग्रे ॥ ऐंनमः वामपादकक्ष्ये ॥ ह्लींनमःजानुनि॥ श्रींनमः पादाग्रे ऐंनमः लिंगे ह्लींनमः हृदि श्रींनमः नादांते ॥ इतिविद्यान्यासः ॥ अथनवयोनिन्यासः ऐंनमः दक्षकर्णे ॥ ह्लींनमः वामकर्णे ॥ श्रींनमः चिबुके ॥ ऐंनमः दक्षशंखे ॥ ह्लींनमः वामशंखे ॥ श्रींनमः मुखे ऐंनमः दक्षनेत्रे ॥ ह्लींनमः वामनेत्रे ॥ श्रींनमः कुक्षौ ॥ ऐंनमः दक्षजानुनि ॥ ह्लींनमः वामजानुनि ॥श्रींनमः नाभौ ॥ ऐंनमः दक्षपादे॥ह्लींनमः वामपादे श्रींनमः हृदि ॥ ऐंनमःदक्षजानुनि ॥ ह्लींनमः वामजानुनि ॥ श्रींनमःकंठे ॥ इतिनवयोनिन्यासः ॥ ततःपुनरपि षडंगन्यासःसान्वयेन ॥ ऐंहृदयायनमः ह्लींशिरसेस्वाहा श्रींशिखायैवषट् ॥ प्रत्यंगिरेकवचायहुं ॥ मेमरक्षरक्षनेत्रत्रया यवौषट् ॥ ममशत्रूणांभक्षभक्ष ॐस्वाहा अस्त्रायफट् इतिन्यासैर्देहंसंनह्य॥मूलाधारेमूलविद्यांविद्युत्कोटिसमप्रभाम्॥ सूर्यकोटिप्रतीकाशांचंद्रकोटिप्रभांप्रिये ॥ बिसतंतुस्वरूपांतांबिंदुत्रिवलयांप्रिये ॥ ऊर्ध्वशक्तिनिपातेनसहजेनवरानने॥ मूलशक्तिदृढत्वेन मध्यशक्तिप्रबोधतः ॥ परमानंद

संदोहमानंदं चिंतयेत्परम् ॥ इत्यंतर्यजनंकृत्वापीठ
२५ पूजांन्यासेनस्वदेहेकुर्यात॥ मूलाधारे आधारशक्तये
नमः ॥ प्रकृत्यैनमः ॥ कमठायनमः ॥ शेषायनमः॥
पृथिव्यैनमः ॥ सुधांबुधयेनम ॥ मणिद्वीपायनमः ॥
चिंतामणिगृहायनमः रत्नवेदिकायैनमः ॥ मणिपी
ठायनमः ॥ दिक्षु नानामुनिगणेभ्योनमः ॥नानादेवे
भ्योनमः ॥ धर्मायनमः दक्षांसे ॥ ज्ञानायनमः वा
मांसे ॥ वैराग्यायनमः वामोरौ ॥ ऐश्वर्यायनमःद
क्षोरौ ॥ अधर्मायनमः दक्षकुक्षौ ॥ अज्ञानायनमः
[illegible]
नमः वामकुक्षौ ॥ शेषायनमः ॥ विकृतिमयकेस
रेभ्योनमः ॥ पंचाशद्बीजभूषितकर्णिकायैनमः ॥
सूर्यमंडलायनमः ॥ सोममंडलायनमः ॥ वैश्वानर
मंडलायनमः ॥ संसत्त्वायनमः॥रंरजसेनमः ॥ तंत
मसेनमः ॥ आंआत्मनेनमः ॥ पंपरमात्मनेनमः ॥
ह्रींज्ञानात्मनेनमः ॥ पत्रेषु वामायैनमः ॥ ज्येष्ठायै
नमः ॥ रौद्र्यैनमः ॥ अंबिकायैनमः ॥ इच्छायै
नमः ॥ ज्ञानायैनमः ॥ क्रियायैनमः ॥ कुब्जिकायै
नमः ॥ चित्रायैनमः ॥ विषघ्निकायैनमः ॥ दूतायै
नमः ॥ आनंदायैनमः ॥ मध्ये ॥ मनोन्मन्यैनम॥

ऐंपरायैनमः ॥ अपरायैनमः ॥ विरूपायैनमः ॥ परापरायैनमः ॥ ह्सौंसदाशिवमहाप्रेतासनायैनमः ॥ ब्रह्मविष्णुरुद्रेश्वरसदाशिवमहाप्रेतमहापद्मासनाय नमः ॥ परमशिवपर्यंकायनमः ॥ इति पीठंन्यस्य ॥ तत्रैवहृपयेस्वाभेदेन श्रीप्रत्यंगिरां ध्यायेत् ॥ ॐ ऊर्ध्वंकपालंडमरुंत्रिशूलंसंबिभ्रती बद्धकलावतंसम् ॥ पिंगोर्ध्वकेशी सितभीमदंष्ट्राभूयाद्विभूत्यैममभद्रकाली ॥ इति श्रीप्रत्यंगिरां ध्यात्वा मानसोपचारैराराध्य ॥ मनसा यथाशक्तिजपहोमादिकं च कृत्वा कामकलां विचिंत्य तदुपरि श्रीप्रत्यंगिरां यथोक्तां ध्यायन् स्ववामभागेषट्कोणांतर्गतत्रिकोणद्वयबिंदुं वा स्ववृत्तचतुरस्रं कृत्वा ॥ स्वदक्षेत्रिकोणंवृत्तंबिंबमंडलं भूमौविरच्य ॥ तत्राधारशक्तिं प्रपूज्य तत्राधारंनिक्षिप्य तदुपरि अमंत्रेणशोधितं हृन्मंत्रेणपूरितपात्रे शंखादिकंवासंस्थाप्य तत्रगंगेत्यादितीर्थमावाह्य ॥ गंधादीन्प्रणवेन निक्षिप्य वह्निसूर्यसोमकलाभिः संपूज्य धेनुमुद्रां प्रदर्श्य स्वमंत्रेणसंपूजयेदिति विधिविहितसामान्यार्घोदकेनस्ववामे कृतमभ्युक्ष्य ॥ तत्राधारशक्तिभ्यो नम इत्यादिपीठपूजाक्रमेणसंपूज्य नमः इत्याधारं

प्रक्षाल्य मंडलोपरिसंस्थाप्य ॥ रंवह्निमंडलाय
दशकलात्मनेनमः इतिप्रपूज्य ॥ फडितकलशं
प्रक्षाल्य ॥ वारिणाऽऽपूर्य ॥ रक्तवस्त्रमाल्यादि
नासंभूष्य ॥ देवंमध्येसंस्थाप्य ॥ अंअर्कमं
डालयद्वादशाकलात्मनेनमः इति कलशं
सम्पूज्य ॥ ॐ चंद्रमडलायषोडशकलात्मनेनमः
इति द्रव्येण संपूज्य ॥ फडितिसंरक्ष्य हुमित्यव
गुंठ्य मूलेनसंवीक्ष्य ॥ नमः इत्यभ्युक्ष्य मूलेन
गंधमाघ्राय ॥ कुंभेपुष्पंदत्त्वा ॥ शापमोचनं
कुर्यात ॥ एवमेवपरब्रह्मस्थूलसूक्ष्ममयंध्रुवम ॥ क
चोर्द्धवांब्रह्महत्यांतेनतेनाशयाम्यहम् ॥ १ ॥ सूर्य
मंडलसंभूतेवरुणानयसंभवे ॥ अमाबीजमयेदेविशु
क्रशापाद्विमुच्यताम् ॥ २ ॥ वेदानांप्रणवो बीजं
ब्रह्मानंदमयंयदि ॥ तेनसत्येनहेदेविब्रह्महत्यांव्य
पोहतु ॥ ३ ॥ इति त्रिः ॥ ततःॐवांवींवूंवैं वौंवः ॥
ब्रह्मशापमोचितासुरादेव्यैनमः ॥ इत्यपि त्रिः ॥ ह्रीं
श्रींक्रांक्रींक्रूंक्रैंक्रौंक्रः सुराकृष्णशापं मोचयमोचय
अमृतं स्रावयस्रावयस्वास्वा इति॥त्रिः॥हंसःशुचिषद्व
सुरंतरिक्षस०न्हृष० द्वयोमसदब्जा ऋतजा अद्रिजा
ऋतम् ॥ इत्यपि त्रिःपठित्वा ॥ आनंदभैरवींचत

त्रध्यात्वा ॥ हसरक्षमलवय ॥ ॐ आनंदभैरवायवौ षट् ॥ ससहक्षमलवयहुंसुरादेव्यै वोषट् ॥ इतिदेवदेव्यौ त्रिःसंपूज्य ॥ द्रव्यमध्ये दक्षिणावर्तेनत्रिपंक्त्या अंमनः आंनमः इंनमः ईंनम उंनमः ऊंनमः ऋंनम ॠंनमः ऌंनमः ॡंनमः एंनमः ऐंनमः ओंनमः औंनमः अंनमः अःनमः कंनमः खंनमः गंनमः घंनमः ङंनमः चंनमः छंनमः जंनमः झंनमः ञंनमः टंनमः ठंनमः डंनमः ढंनमः णंनमः तंनमः थंनमः दंनमः धंनमः नंनमः पंनमः फंनमः बंनमः भंनमः मंनमः यंनमः रंनमः लंनमः वंनमः शंनमः षंनमः संनमः क्षंनमः इतिशक्तिचक्रंविलिख्य ॥ तन्मध्येहंनमः क्षंनमः तत्समावेशाद्द्रव्यमध्येऽमृतंविचिंत्य धेनुमुद्रयाऽमृतीकृत्य वमितिसुधाबीजंमूलंपठन् घटं धृत्वात्मश्रीचक्रयोर्मध्येत्रिकोणषट्कोणवृत्तचतुरस्रे विलिख्य चतुरस्रेपूर्णगिरिपीठायनमः उड्डीयानपीठायनमः कामरूपपीठाय नमः जालंधरपीठाय नमःइतिसंपूज्य षट्कोणेषडंगंसंपूज्य त्रिखंडेनकोणाग्रदक्षोत्तरंसंपूज्य मध्येआधारशक्तिं संपूज्य त्रिकोणगर्भेयंत्रिकांसंस्थाप्य नम इतिसामान्यजलेनाभ्युक्ष्य पंधूम्रार्चिषेनमः रंऊष्मायैनमः लं

२० ज्वालिन्यैनमः वंज्वलिन्यैनमः शंविस्फुलिगिन्यै स्तो०
२९ नमः षंसुप्रियायैनमः संस्वरूपायैनमः हंकपिलायै
नमः ळंहव्यवाहायैनमः शंकव्यवाहायैनमः इतिसं
पूज्यमध्येरंवह्निमंडलायदशकालात्मनेनमः इतिसं
पूज्य षट्कोणेषडंगंचसंपूज्यमध्येमूलेन देवींसंपूज्य
पात्रंफडिति प्रक्षाल्य यंत्रिकोपरिस्थाप्य तत्रकंभंत
पिन्यैनमः खंबंतापिन्यैनमः गंफंधूम्रायैनमः घंपंमरी
च्यैनमः ङंनंज्वलिन्यैनमः चंधंरुच्यैनमः छंदंसुषु
म्णायैनमःजंथंभोगदायैनमःझंतंविश्वायनमःञंबोधि
न्यैनमःटंठंधारिण्यैनमःठंडंक्षमायैनमःइतिअंअर्कमं
२९

---

डालायद्वादशकलात्मनेनमःइतिसंपूज्यत्रिकोणप्रत्तष
ट्कोणपात्रंविलिख्यसमस्तव्यस्तसंत्रेणसंपूज्यवरुण
बीजंविलोममातृकांचपठन्भूतेनत्रिकोणआंमानदा
जलेनापूर्य ॥ तत्रसुगंधादिनिक्षिप्य॥अंअमृतायैनमः
यैनमःइंउषायैनमःईंतुष्टयैनमः उंपुष्टयैनमःऊंरत्यैन
मः ऋंधृत्यैनमः ॠंशशिन्यैनमः लृंचंद्रिकायैनमः
लॄंकांत्यैनमः एंज्योत्स्यनायैनमः ऐंश्रियैनमः ओं
प्रीत्यै नमः औं अंगदायै नमः अंपूर्णायैनमः अः
पूर्णामृतायैनमः इति षोडशकलात्मनेसोममंडलाय
नमः इति संपूज्य पूर्ववन्मंत्रद्रव्येविलिख्य त्रिकोण

१० त्रिरेखायां अंआं इंईउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः
३० कंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदंधंनंपंफंबंभंमंयंरं
लंवंशंषंसं इति त्रिस्त्रिर्विलिख्य मूलखंडत्रयेण त्रिको
णंसंपूज्य षट्कोणे षडंगंच संपूज्य गंगेत्यादितीर्थ
मावाह्य आनंदभैरवभैरव्यौ स्वमंत्रेणसंपूज्य पूर्वा
दितः ॥ ग्लूंगगनरत्नेभ्योनमः पूर्वे ॥ स्लूंस्वर्गरत्ने
भ्योनमःदक्षिणे ॥ प्लूंपातालरत्नेभ्योनमःपश्चिमे ॥
म्लूंमर्त्यरत्नेभ्योनमः उत्तरे ॥ न्लूंनागरत्नेभ्यो
नमः मध्ये॥इतिसंपूज्य ॥ मांसादिसंशोध्यहुमित्य
वगुंठ्य अमृतीकृत्य तालत्रयेणदिशः संबध्य तदुपरि ३०

सप्तधामूलंसंपूज्य तत्र देवीमावाह्य तालत्रयेण
दिग्बंधंविधायावगुंठ्यामृतीकृत्ययोनिं प्रदर्श्य ह्सौं
नमः संपूज्य शंखमुद्रांप्रदर्श्य षडंगेनसंकलीकृत्य
मत्स्यमुद्रया आच्छाद्य मूलंसुधाबीजंजप्त्वा पात्रं
देवीरूपं विभावयेदिति । ततोदेव्याज्ञामादाय घट
समीपे चरुपात्रं ततः शक्तिपात्रं भोगपात्रस्वपात्रं
योगिनीपात्रं वीरपात्रं बलिपाद्यार्घ्याचमनीयपाणि
संस्थाप्य चर्वणकारणेन तत्तन्मुद्रया श्रीपात्रात्समु
द्धृत्य आनंदभैरवं तर्प्पयामि नमः इति मंत्रेणत्रिः
संतर्प्य ततः गुरुंश्रीमच्छ्रीअमुकानंदनाथ श्रीपादुकां

तर्प्पयामि नमः इति त्रिः संतर्प्य परमगुरुश्रीअमु
कानंदनाथश्रीपादुकां तर्प्पयामि नमः इतित्रिःसंत
र्प्यपरमाचार्यगुरुं श्रीमच्छ्रीअमुकानंदनाथश्रीपादुकां
तर्प्पयामि नमः इति त्रिःसंतर्प्य॥ श्रीपात्रामृतेनमूल
देवींसायुधाधांसवाहनांसपरिवारां तर्प्पयामिनमःइति
संतर्प्पयेदिति कलशपूजाविधिः ॥ चक्रोपरिपीठो
परिपीठपूजांपूर्ववद्विधाय ॥ अथ श्रीप्रत्यंगिरां
ध्यात्वावायुबीजेन वामनासापुटेन देवीस्वहृदया
त्कुसुमांजलिमानीयतत्रावाह्य ॥ ॐ देवेशिभक्तिसु
लभेपरिवारसमन्विते॥ यावत्त्वांपूजयिष्याभितावद्दे



विइहावह इतिपठित्वामूलं श्रीभैरवसहिते श्रीप्रत्यां
गिरे इहागच्छगच्छ इहसन्निरुद्धचसन्निरुद्धचममस
र्वोपचारसहितां पूजांगृह्णगृह्णइत्यावाहनादिमुद्राःप्रद
र्श्य प्राणप्रतिष्ठांश्रीचक्रेलेलिहानमुद्रया विधाय
दशदिग्धवंधनंकृत्वाऽवगुंठयसंकलीकृत्यपरमीकृत्य
धेनुयोनिप्रदर्श्य वराभयपुस्तकाक्षमालाज्ञानांकुशपा
शचापवणकपानादिमुद्राः प्रदर्श्य श्रीपात्रामृतेनसा
युधां सवाहनां सपरिवारां सावरणां श्रीभैरवसहितां
श्रीप्रत्यंगिरांतर्पयामीति त्रिःसंतर्प्य पुनरपिमूलेनप्र
त्यंगिराश्रीपादुकांतर्प्पयामिनमः इतित्रिःसंतर्प्य मूल

मुच्चार्य्य एतत्पाद्यंश्रीभैरवसहितप्रत्यंगिरायैनमः पाद्यम् एवमर्घ्यंस्वाहाशिरशिआचमनीयं मधुपर्कंचसुधामुखेस्नानायनमः सर्वांगेइतिसुस्नाप्यशुद्धदुकूलेनांगप्रोञ्छ्यविचित्रपटवस्त्रकुंकुमकस्तुरीचंदनसिंदूरमुकुटकुंडलहारनूपुरादिनानालंकारान्दत्त्वा पुनराचमनीयंदद्यात् ॥ ततोमध्यनामांगुष्ठाग्रैर्गंधोनमः इति गंधंअंगुष्ठतर्ज्जनीभ्यांपुष्पाणिवौषट् इतिपुष्पैः संपूज्य धूपपात्रंफडिति संपूज्य पुरतः स्थापयित्वा वामतर्ज्जनींसंस्पृशन् श्रीपात्रा मृतेनधूपंनिवेदयामिनिवेद्य ॥ ॐ जगद्धनियमंत्रमातःस्वाहेतिघंटां



संपूज्य वामेन पाणिनातांवादयन् मध्यमानामांगुष्ठैर्धूपंनिधाय गायत्रींमूलमंत्रंचपठन् वनस्पतिरसोत्पन्नोगंधाढ्यो गंधसंयुतः ॥ आघ्रेयः सर्वदेवानां धूपोयंप्रतिगृह्यतां इतित्रेधोत्तोल्यदेवींधूपयेत् ॥ ततोदीपंसंमुखेसंस्थाप्य पूर्ववत्प्रोक्षणंपूजनंकृत्वा वाममध्यमयादीपपात्रंस्पृशन् दीपंनिवेदयामितिनिवेद्य पूर्ववद्धंटांवादयन्मध्यमानामामध्येदीपपात्रमंगुष्ठेनधृत्वादर्शयन् गायत्रींमूलंचपठन् सुप्रकाशो महादीपः सर्वत्रतिमिरापहः ॥ सबाह्याभ्यंतरं ज्योतिर्दीपोयंप्रतिगृह्यतामितिदीपयेत ॥ ततः

स्वर्णादिपात्रे कुंकुमेन वा सुपात्रचंद्ररूपंचसंकृ
त्वा मध्येदीपमेकमष्टपत्रेषुदीपाष्टकं संस्थाप्यश्रींसौः
ग्लूं म्लूं स्लूं प्लूं व्लूं सौं श्रींरत्नेश्वर्यैनमःइति मूले
नाभ्यर्च्य स्थालकंमस्तकांतमुद्धृत्य नववारं मूलं
पठित्वा"समस्तचक्रचक्रेशियुते देविनवात्मिके॥आ
रार्त्तिकमिदंदेविगृहाण मम सिद्धये" इतिचक्रमुद्रया
नीराजयेत् ॥ ततोनाना नैवेद्यंस्वर्णादिपात्रेनिःक्षिप्य
हमित्यवगुंठ्य धेनुमुद्रयाऽमृतीकृत्य नैवेद्यपात्रंस्पृश
न् मूलांते"हेमपात्रगतंदिव्यंपरमान्नंसुसंस्कृतं पंचधा
षड्रसोपेतंगृहाणपरमेश्वरि" नैवेद्यंनिवेदयामीतिदक्षा



नामांगुष्ठाभ्यामुत्सृजेत् ॥ ततःपुनराचमनीयंदत्त्वा
मूलादितः कर्प्पूरादियुक्तातांबूलंनिवेदयामीतिपूर्व
वद्दद्यात सर्वेषामर्घ्यपात्रजलेनोत्सर्गः कार्यःततस्त
त्त्वमुद्रयादेवींत्रिःसंतर्प्य पूर्वोक्तमुद्राःप्रदर्श्य योनिं
हृदिक्षोभिणींमुखेद्राविणींभ्रूमध्ये आकर्षणींललाटे
यशस्विनींब्रह्मरंध्रे आल्हादिनींपंचमुद्रामयींप्रदर्श्य
कृतांजलिः श्रीप्रत्यंगिराया आवरणपूजामार
भेत् तत्रादौ चतुरस्रेपूर्वादितः इंद्रश्रीपादुकांपूजया
मिनमः अग्नेय्यामग्निश्रीपादुकांपूजयामिनमःदक्षिणे
यमश्रीपादुकांपूजयामिनमःनैर्ऋत्यां निर्ऋतिश्रीपादु

कांपूजयामिनमः पश्चिमेवरुणश्रीपादुकां पूजयामिन
मः वायव्येवायुश्रीपादुकांपूजयामिनमः उत्तरेकुबेरश्री
पादुकांपूजयामिनमः ईशान्ये ईशानश्रीपादुकांपूजया
मिनमः इंद्रेशानयोर्मध्येब्रह्मश्रीपादुकांजयामिनमः व
रुणराक्षसयोर्मध्ये विष्णुश्रीपादुकांपूजयामिनमः इति
पूजयेत्तर्प्पयेच्च ॥ ततस्तत्समीपेवज्रश्रीपादुकांपूजया
मि तर्प्पयामिनः शक्तिश्रीदुकांपूजयामितर्प्पयामिन
मः दंडश्रीपादुकांपूजयामितर्प्पयामिनमः खड्गश्रीपा
दुकांपूजयामितर्पयामिनमः पांशश्रीपादुकांपूजया
मितर्पयामि नमः ध्वजश्रीपादुकांपूजयामितर्प्प

यामिनमः गदाश्रीपादुकांपूजयामितर्प्पयामि नमः
त्रिशूलश्रीपादुकांपूजयामितर्प्पयामिनमः पद्मश्री
पादुकांपूजयामितर्प्पयामिनमः चक्रश्रीपादुकांपूजया
मितर्प्पयामिनमः इतिपूजयेत्तर्प्पयेच्च ॥ ततस्त्रिवृत्ते
कौलानंदनाथ श्रीपादुकांपूजयामितर्प्पयामिनमः
परमगुरुश्रीपादुकां पूजयामितर्पयामिनमः परमा
चार्य श्रीपादुकांपूजयामितर्प्यामिनमः परमेष्ठि
श्रीपादुकांपूजायामितर्प्पयामिनमः दिव्यौघश्रीपा
दुकांपूजयामितर्प्पयामिनमः सिद्धौघश्रीपादुकांपू
जयामितर्प्पयामिनमः पुनः स्वगुरुश्रीपादुकांपूज

१०. यामितर्प्पयामिनमः इतिपूजयेत्तर्प्पयेच्च ॥ ततोष्टद स्तो०
३५ लेषु पूर्वादितः अंअसितांगभैरव श्रीपादुकांपूजया
मितर्प्पयामिनमःआंब्राह्मी श्रीपादुकांपूजयामितर्प्प
यामिनमःपूर्वेइंरुरुभैरवश्रीपादुकापूजयामितर्प्पयामि
नमःईंमाहेश्वरीश्रीपादुकांपूजयामितर्प्पयामिनमःआ
ग्नेये उं चंडभैरवश्रीपादुकांपूजयामितर्प्पयामिनमः
ऊंकौमारीश्रीपादुकांपूजयामितितर्प्पयामिनमः दक्षि
णेऋंक्रोधभैरव श्रीपादुकांपूजयामितर्प्पयामि नमः ३५
ॠंवैष्णवी श्रीपादुकांपूजयामितर्प्पयामिनमः नैऋंते
ऌंउन्मत्तभैरवश्रीपादुकांपूजयामितर्प्पयामि नमः

ॡंवाराहीश्रीपादुकांपूजयामितर्प्पयामिनमः पश्चि
मे एंकपालिभैरवश्रीपादुकांपूजयामितर्प्पयामिनमः
ऐंमाहेंद्रीश्रीपादुकांपूजयामितर्प्पयामिनमः वायव्ये
ओंभीषणभैरव श्रीपादुकांपूजयामितर्प्पयामि नमः
औंचामुण्डाश्रीपादुकांपूजयामितर्प्पयामिनमः उत्तरे
अंसंहारभैरव श्रीपादुकांपूजयामितर्प्पयामिनमः अः
नारसिंहीश्रीपादुकां पूजयामि तर्प्पयामि नमः ई
शान्ये इतिपूजयेत्तर्प्पयेच्च ॥ ततोग्रंथिस्थानेषु पश्चि
मादितःकामरूपपीश्रीपाठदुकां पूजयामितर्प्पयामि
नमः वायव्ये मलयगिरिपीठश्रीपादुकांपूजयामि

१० ३७ मितर्पयामिनमः ॐऐंह्रींश्रींक्षोभिणीश्रीपादुकां पूज यामितर्पयामिनमः ॐऐंह्रींश्रींद्राविणीश्रीपादुकांपूज यामितर्प्पयामिनमः ॐऐंह्रींश्रींभ्रामणीश्रीपादुकांपू जयामितर्पयामिनमः ॐऐंह्रींश्रींरौद्रीश्रीपादुकांपूज यामितर्पयामिनमः ॐ ऐंह्रींश्रींसंहारिणीश्रीपादुकां पूजयामितर्प्पयामिनमः इतिपूजयेत्तर्प्पयेच्च ततःॐ ऐंह्रींश्रींआग्नेयेहृदयश्रीपादुकांपूजमितर्प्पयामिनमः ॐऐंह्रींश्रींईशानेशिरः श्रीपादुकांपूजयामिनमः ॐ ऐंह्रींश्रींनैर्ऋतेशिखाश्रीपादुकांजयामितर्पयामिनमः ॐऐंह्रींश्रींवायव्ये कवचश्रीपादुकांपूजयामितर्पया

मिनमः ॐऐंह्रींश्रींआमध्यनेत्रश्रीपादुकांपूजयामि तर्पयामिनमः ॐऐंह्रींश्रींदिक्षुअस्त्रश्रीपादुकांपूजया मितर्पयामिनमः इतिपूजयेत्तर्पयेच्चततस्त्रिकोणे ॐ ऐंह्रींश्रींआग्नेयेकालीश्रीपादुकांपूजयामितर्पयामिन मः ॐऐंह्रींश्रींईशानेभद्रकाली श्रीपादुकांपूजयामि तर्पयामिनमः ॐऐंह्रींश्रींआग्नेये नित्याकाली श्रीपा दुकांपूजयामितर्पयामिनमःइतिपूजयेत्तर्पयेच्चततोबिं दौमूलमुच्चार्य्यश्रीभैरवसहितां श्रीमच्छ्रीप्रत्यंगिराप रावामापादुकांपूज्यामितर्पयामिनमः इतिपूजयेत्तर्प येच्च पुनश्चतुरस्रेपश्चिमेबांवटुकंपूजयामिनमः उत्तरे

तर्प्पयामिनमः उत्तरे कोलगिरिपीठश्रीपादुकांपूज
यामितर्प्पयामिनमः ईशान्ये कालांतकपीठश्रीपादु
कांपूजयामितर्प्पयामिनमः पूर्वे चौहारपीठश्रीपादुकां
पूजयामितर्प्पयामिनमः आग्नेये जालंधरपीठश्री
पादुकांपूजयामितर्प्पयामि नमः दक्षिणे उड्डीयान
पीठश्रीपादुकांपूजयातर्प्पयामिनमः नैर्ऋते देवकूट
पीठश्रीपादुकांपूजयामितर्प्पयामिनमः इतिपूजयेत्त
र्प्पयेच्च ततो वृत्तमंडलेपश्चिमादितः ऊर्ध्वंअधश्च
हेरुकभैरवश्रीपादुकांपूजयामितर्प्पयामिनमः वायव्ये
वेतालभैरवश्रीपादुकांपूजयामितर्प्पयामिनमः उत्तरे

त्रिपुरांतकभैरवश्रीपादुकांपूजयामितर्प्पयामिनमः ई
शान्ये अग्निजिह्वभैरव श्रीपादुकां पूजयामितर्प्प
यामिनमःपूर्वे कालांतकभैरवश्रीपादुकां पूजयामित
र्पयामिनमः आग्नेये कपालिभैरवश्रीपादुकांपूजया
मितर्प्पयामिनमः दक्षिणे एकपादभैरवश्रीपादुकांपू
जयामितर्पयामिनमः नैर्ऋते भीमरूपभैरवश्रीपादु
कांपूजयामितर्प्पयामिनमः ऊर्ध्वं मलयभैरवपादुकां
पूजयामितर्प्पयामिनमः अधःहाटकेश्वरभैरवश्रीपा
दुकां पूजयामितर्पयामिनमः इतिपूजयेच्च ततोष्टयो
निषुपूर्वादितः ॐ ऐंह्रीं श्रींस्तंभिनीश्रीपादुकांपूजया

सांयोगिनीभ्योनमः पूर्वे क्षां क्षेत्रपालायनमः दक्षे
गं गणतये नमः इतिपूजयेत्तर्प्पयेच्चवायव्येसुधाभ्यो
नमः ईशानेद्वादशादित्येभ्योनमः आग्नेये एकादश
रुद्रेभ्योनमः नैर्ऋतेसर्वेभ्योभूतेभ्योनमः इतिपूजये
त्तर्पयेच्च इतिसंपूज्यततोदेवीसमीपेदक्षहस्ते असि
श्रीपादुकां पूजयामितर्पयामिनमः चर्मश्रीपादुकां
पूजयामितर्पयामिनमःपुनरपिबिंदौपूर्ववन्मूलेदेवींसं
पूज्यसंपर्प्य मुद्राःप्रदर्श्यपुष्पांजलित्रयेणसंपूज्यनित्य
होममाचरेत् यथा अग्नौजले वा चक्रंविलिख्यविभा
व्यच॥ प्राणायस्वाहा व्यानायस्वाहा उदानायस्वाहा



अपानायस्वाहा समानायस्वाहा इतिहुत्वा षडंगा
हुतीः कुर्यात् ततःमूलेनस्वदेव्यैहुत्वास्वांस्वहृदिविसृ
ज्यईशानेमंडलं कृत्वा बां बटुकायनमः एह्येहिदेवी
पुत्रबटुकनाथकपिलजटाभारभास्वररत्रिनेत्र ज्वाला
मुख सर्वविघ्नान्नाशय २ सर्वोपचारसहितंबलिंगृह्ण २
स्वाहा आग्नेयेयां योगिनीभ्योनमः ॥ ऊर्ध्वं
ब्रह्मांडतो वा दिविगगनतलेभूतलेनिष्कले वा
पातालेवातलेवापवनसलिलयोर्यत्रकुत्रस्थितावाक्षेत्रे
पीठोपपीठादिषुचकृतपदाधूपदीपादिकेनप्रीतादेव्यः
सदानः शुभबलिविधिनापांतुवीरेंद्रवंद्याः ॥ १ ॥

यांयोगिनीभ्योनमः स्वाहा सर्वयोगिनीह्रींफट्स्वाहा इति योगिनीबलिः नैर्ऋते क्षांक्षींक्षूंक्षैंक्षौंक्षः क्षेत्रपाल अतिबलिसहितंबलिंगृह्ण २ स्वाहा इति क्षेत्रपाल बलिः वायव्येगांगींगूंगणपतयेवरवरसर्वजनंमेवशमा नयबलिंगृह्ण २ स्वाहा इति गणपतिबलिः इतिबलिं विरचय्यच्छागादिबलिमपिदत्त्वा गुरुदेव्यौ ध्यायन् यथाशक्तिजपंविधाय पुनरपिप्राणायामऋष्यादिक रांगन्यासानंतरं "गुह्यातिगुह्यगोप्त्रीत्वंगृहाणास्मस्म त्कृतंजपंसिद्धिर्भवतुमेदेवित्वत्प्रसादान्महेश्वरि" इत्य नेनतेजोमयंजपफलंदेवीवामहस्तेसमर्प्य कवचनाम



सहस्रस्तोत्रादिपठित्वाष्टांगैःप्रणिपत्यप्रदक्षिणीकृत्य सामयिकैःसहमंडलवंदनंविधाय नंदंतु साधकाःसर्वे विनश्यंतुविदूषकाः । अवस्थाशांभवीमेस्तुप्रसन्नोस्तु गुरुःसदा ॥ इत्यादिशांतिंपठित्वा ईशान्येनिर्माल्ये ननिर्माल्यवासिन्यैनमः इतिसंपूज्य ततःइतिपूर्वजा ग्रत्स्वप्नसुषुप्त्यवस्था सुमनसावाचापद्भ्यामुदरेणशि श्नाप्राणदेहधर्माधिकारतोयुक्तं यत्कृतंतत्सर्वंमदीयं श्रीप्रत्यंगिराचरणेसमर्प्पणमस्तुॐतत्सतइतिसमर्प्य सुखंविहरेदितिशिवंभद्रम् इतिश्रीरुद्रयामलेतंत्रेउमा महेश्वरसंवादे पंचांगखंडेप्रत्यंगिरापद्धतिः समाप्ता ॥

देव्युवाच। भगवन् सर्वधर्मज्ञ सर्वशास्त्रार्थ पारग॥ देव्याः प्रत्यंगिरायाश्चकवचंयत्प्रकाशितम्॥१॥सर्वार्थसाधनंनामक थयस्वमयिप्रभो॥भैरवउवाच॥शृणुदेविप्रवक्ष्यामिकवचंपरमाद्भुतम्॥२॥सर्वार्थसाधनंनामत्रैलोक्येचातिदुर्लभं। सर्वसिद्धिमयंदेविसर्वैश्वर्यप्रदायकं॥३॥ पठनाच्छ्रवणान्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत्॥सर्वार्थसाधकस्यास्यकवचस्यऋषिः शिवः ॥४॥ छंदोविराट्परशक्तिर्जगद्धात्रीचदेवता॥ धर्मार्थकाममोक्षेषुविनियोगः प्रकीर्त्तितः ॥५॥ प्रणवंमेशिरःपातुवाग्भवंचललाटकम् ॥ ह्रींपातुदक्षनेत्रंमेलक्ष्मीर्वामं

सुरेश्वरी ॥ ६ ॥ प्रत्यंगिरादक्षकर्णंवामेकामेश्वरीतथा लक्ष्मीःप्राणंसदापातुबंधनंपातुकेशवः ॥ ७ ॥ गौरीतुरसनांपातुकंठंपातुमहेश्वरः ॥ स्कंधदेशंरतिःपातुभुजौतुमकरध्वजः ॥ ८ ॥ शंखनिधिकरःपातुवक्षःपद्मनिधिस्तथा ॥ ब्राह्मीमध्यंसदापातुनाभिंपातुमहेश्वरी ॥ ९ ॥ कौमारीपृष्ठदेशंतुगुह्यंरक्षतुवैष्णवी ॥ वाराहीचकटिंपातुचैंद्रीपातुपदद्वयम् ॥१०॥ भार्यांरक्षतुचामुंडालक्ष्मीरक्षतुपुत्रकान् ॥ इंद्रःपूर्वेसदापातुआग्नेय्यामग्निदेवता ॥ ११ ॥ याम्येयमः सदापातुनैर्ऋत्यांनिर्ऋतिस्तथा । पश्चिमेवरुणः पातुवायव्यां

वायुदेवता ॥ १२ ॥ सौम्यांसोमः सदापातुचैशान्यामीश्वरोविभुः ॥ ऊर्ध्वंप्रजापतिः पातुह्यधश्चानंतदेवता ॥ १३ ॥ राजद्वारेश्मशानेच अरण्येप्रांतरे तथा ॥ जलेस्थलेचांतरिक्षेशत्रूणांनिवहेतथा ॥१४॥ एताभिः सहितादेवीचतुर्बीजामहेश्वरी ॥ प्रत्यंगिरा महाशक्तिः सर्वत्रमांसदावतु ॥१५॥ इतितेकथितंदेवि सारात्सारंपरात्परम् ॥ सर्वार्थसाधनंनामकवचंपरमाद्भुतम् ॥१६॥ अस्यापिपठनात्सद्यः कुबेरोपिधनेश्वरः ॥ इंद्राद्याः सकलादेवाः धारणात्पठनाद्यतः ॥ १७ ॥ सर्वसिद्धिश्वराः संतः सर्वैश्वर्यमवाप्नुयुः ॥



पुष्पांजल्यष्टकंदत्त्वामूलेनैवसकृत्पठेत्॥१८॥ संवत्सरकृतायास्तुपूजायाः फलमाप्नुयात् ॥ प्रीतिमन्योन्यतः कृत्वाकमलानिश्चलागृहे ॥१९॥ वाणीचनिवसेद्वक्त्रेसत्यं न संशयः॥ योधारयतिपुण्यात्मासर्वार्थसाधनाभिधम् ॥२०॥ कवचंपरमंपुण्यंसोपिपुण्यवतां वरः ॥ सर्वैश्वर्ययुतोभूत्वात्रैलोक्यविजयीभवेत्॥२१॥ पुरुषोदक्षिणेबाहौनारीवामभुजेतथा ॥ बहुपुत्रवतीभूत्वाधन्यापिलभतेसुतम्॥२२॥ ब्रह्मास्त्रादीनिशस्त्राणि नैवकृन्तंतितत्तनुम् । एतत्कवचमज्ञात्वायोजपेत्परमेश्वरीम् ॥२३॥ दारिद्र्यं परमंप्राप्यसोचिरान्मृत्युमा

प्नुयात् ॥ इतिश्रीरुद्रयामलेतंत्रपंचांगखंडेप्रत्यंगिरायाःसर्वार्थसाधनंनामकवचंसमाप्तम् ॥ ईश्वरउवाच॥ शृणुदेविप्रवक्ष्यामिसांप्रतंत्वत्पुरः सरम्॥ सहस्रनामपरमंप्रत्यंगिरायाः सिद्धये ॥ सहस्रनामपाठी यः सर्वत्रविजयी भवेत्॥पराभवो न चास्यास्तिसभायां वासनेरणे ॥ तथातुष्टाभवेद्देवीप्रत्यंगिरास्यपाठतः ॥ तथाभवतिदेवेशिसाधकःशिवएवहि।अश्वमेधसहस्राणिवाजपेयस्यकोटयः॥सकृत्पाठेनजायंतेप्रसन्नायत्पराभवेत्॥भैरवोस्यऋषिश्छंदोऽनुष्टुद्देवीसमीरिताप्रत्यंगिराविनियोगः स्यात्सर्वसंपत्तिहेतवे ॥ सर्वकार्येषुसंसिद्धिः सर्वसंपत्तिदाभवेत॥ एवंध्यात्वापठेद्देवींयदीच्छेदात्मनोहितंअथध्यानम्।आशांबरामुक्तकचाघनच्छविर्ध्येया सचर्मासिकराविभूषणा॥ दंष्ट्रोग्रवक्त्राग्रसिता।हिताात्वयाप्रत्यंगिराशंकरतेजसेरिता ॥ ॐअस्यश्रीप्रत्यंगिरामहामंत्रस्यंभैरवऋषिःअनुष्टप्छंदः॥ श्रीप्रत्यंगिरादेवताह्रींबीजं श्रींशक्तिः स्वाहाकीलकंविद्यासिद्ध्यर्थेजपेपाठेविनियोगः ॥ ॐदेवीप्रत्यंगिरासेव्याशिरसाशशिशेखरा ॥ सममासाधर्मिणीचसमस्तसुरशेमुषी ॥ सर्वसंपत्तिजननीसमधीःसिंधुसे

प्र० विनी ॥ शंभुसीमंतिनीसोमाराध्याचवसुधारसा ॥ स्तो०
४३ रसा रसवतीवेलावन्या च वनमालिनी ॥ वनजाक्षी
वनचरीवनीवनविनोदिनी ॥ वेगिनीवेगदाबेगवला
स्थानबलाधिका ॥ कलाकलाप्रियाकौलिकोमला
कालकामिनी ॥ कमलाकमलास्याचकमलस्याकम
लावती ॥ कुलीनाकुटिलाकांताकोकिलाकुलभाषि
णी ॥कीरकेलिःकलाकालीकपालिन्यपिकालिका ॥
केशिनीचकुशावर्त्ताकौशांबीकेशवप्रिया ॥ काशि ४३
काशापहाकाशीशंकाशाकेशदायिनी ॥ कुंडलीकुंड

लीस्थाचकुंडलांगदमंडिता ॥ कुशापाशीकुमुदिनी
कुमुदप्रीतिवर्धिनी ॥ कुंदप्रिया कुंदरुचिः कुरंगम
दमोदिनी ॥ कुरङ्गनयनाकुन्दाकुरुवृन्दाभिनन्दि
नी ॥ कुसुम्भकुसुमाकिंचित्कणत्किंकिणिकाक
टुः ॥ कठोरा करणा कण्ठाकौमुदीकंबुकण्ठिनी॥
कपर्दिनी कपटिनीकठिनीकालकण्ठिका ॥ कि
बृहस्ता कुमारीचकुरुन्दाकुसुमप्रिया ॥ कुञ्जरस्था
कुंजरताकुंभिकुंभस्तनद्वया ॥ कुम्भिगाकरभोरुश्चक
दलीदलशालिनी ॥ कुपिताकोटरस्थाचकंकाली

कन्दशेदरा ॥ एकांतवासिनीकिंचित्कंपमानशिरोरुहा ॥ कादंबरीकदंबस्थाकुंकुमीप्रेमधारिणी ॥कुटुंबिनी प्रियायुक्ताक्रतुः क्रतुकरीक्रिया ॥ कात्यायनी कृत्तिकाचकार्त्तिकीयप्रवर्त्तिनी ॥ कामपत्नीकामधात्रीकामेशीकामवंदिता ॥ कामरूपाकामगतिः कामाक्षीकाममोहिता॥ खड्गिनीखेचरीखंजाखञ्जरीटेक्षणाखला । खरगाखरनासाचखरास्याखेलनप्रिया । खरांशुःखेटिनीखट्वाखरखट्वांगधारिणी॥ खलखंडिनिविख्यातिःखडिताखंडवीस्थिरा॥खंडप्रिया



खंडखाद्यासेंदुखंडाचखंजनी॥गंगागोदावरीगौरीगोमत्यपिचगौतमी॥ गयागौगजीगगनागारुडीगरुडध्वजा॥गीतागीतप्रियागोत्रगोत्रक्षयकरीगदा ॥ गिरिभूपालदुहितागोगागोकुलवर्धिनी । घस्तनीघनरुचिर्घनोरुर्घननिःस्वना । घूत्कारिणीघूतकरीघुघूकपरिवारिता ॥ घंटानादप्रियाघंटाघनाघोटप्रवाहिनी ॥ घोररूपाच घोराचघूनीप्रीतिर्घनांजनी ॥ घृताचीघनमुष्टिश्चघटाघंटाघटामृता ॥ घटास्याघटनादैश्चघातपातनिवारिणी ॥ चंचरीकाचकोरीचचा

४५

मुंडाचीरधारिणी ॥ चातुरीचपलाचारुश्चलाचेला
चलाचला । चतुश्चिरंतनाचाकाचियाचामीकरच्छ
विः । चापिनीचपलाचंपूश्चिताचिंतामणिश्रिता ॥
चातुर्वर्ण्यमयीचंचच्चौराचापाचमत्कृतिः । चक्रवर्ति
वधूश्चक्राचक्रांगाचक्रमोदिनी॥ चेतश्चरीचित्तवृत्तिर
चेताचेतनप्रदा ॥ चांपेयीचंपकप्रीतिश्चंडीचंडालवा
सिनी ॥ चिरंजीवितदाचित्तातरुमूलनिवासिनी ॥
छुरिकाछत्रमध्यस्थाछिद्राछेदकरीछिदा । छुच्छुंदरी
पालयित्रीछुंदरीभनिभस्वना ॥ छलिनीछलवच्छिन्ना

४५

छिटिकाछेककृत्तथा ॥ छद्मिनीछांदसीछायाछाया
कृच्छदिरित्यपि ॥ जयाचजयदाजातिजृंभिनीजा
मलायुता ॥ जयापुष्पप्रियाजायाजाप्यजाप्यजगज्ज
निः ॥ जंबूप्रियाजयस्थाचजंगमाजंगमप्रिया॥ जंतु
जंतुप्रधानाचजरत्कर्णाजरद्गवा ॥ जाताप्रियाजीतन
स्थाजीमूतसदृशच्छविः ॥ जन्याजनहिताजायाजं
भजंभिलशालिनी॥ जवदाजववद्वाहाजमानीज्वरहा
ज्वरा ॥ झंझानीलमयीझंझाझणत्कारकराचला ॥
झिंटीशाझस्यकृतझंपायमत्रासनिवारिणी ॥ टंकार

५० स्थाटंकधराटंकाराकारणाटसी ॥ ठकुराठीत्कुतिश्चै
४६ वठिठीरवसनावृत्ता । ठंठानीलमयीठंठाठणत्कारक
राठसा ॥ डाकिनीडामराचैवडिंडिमध्वनिनंदिनी ।
ढक्काप्रियस्वनाढक्कातपिनीतापिनीतया ॥ तरुणीतुं
दिलातुंदातामसीचतपःप्रिया । ताम्राताम्रांबरातालीं
तालीदलविभूषणी ॥ तुरंगात्वरितातोतातोतलाता
दिनीतुला । तापत्रयहरातारातालकेशीतमालिनीत
मादलवच्छयामातालस्वनवतीतमी ॥ तामसी
चतमिस्राचतीव्रातीव्रपराक्रमा । तटस्थागिल

तैलाक्तातारिणीतपनद्युतिः । तिलोत्तमातिलकक्ृ
त्तारकादेशशेखरा । तिलपुष्पप्रियातारातारकेशकु
टुंबिनी ॥ स्थाणुपत्नीस्थितिकरीस्थलस्थास्थलव
र्धिनी । स्थितिस्स्थैर्यास्थविष्ठाचस्थावतिःस्थूलवि
ग्रहा । दंतिनीदंडिनी दीनादरिद्रादीनवत्सला ॥ देवी
देववधूर्दैत्यदमिनीदंतभूषणा ॥ दयावतीदमवतीद
मदादाडिमस्तनी ॥ दंदशूकनिभादैत्यदारिणी
देवताननी ॥ दोलाक्रीडादयायुश्चदंपतीदेवतामयी ॥
दशादीपस्थितादोषादोषहादोषकारिणी ॥ दुगा

४६

दुर्गार्त्तिशमनीदुर्गमादुर्गवासिनी ॥ दुर्गंधनाशिनीदुः
स्थादुःस्वप्नशमकारिणी ॥ दुर्वारादुंदुभिध्वानादूरगा
दूरवासिनी ॥ दरदादरद्दादात्रीदयादादुहितादशा ॥
धुरंधराधुरीणाचधौरेयीधनदायिनी ॥ धीराधीराधरि
त्रीचधर्मदाधीरमानसा ॥ धनुर्धराचधमिनीधूर्त्ताधूर्त
परिग्रहा ॥ धूमवर्णाधूमपानांधूमलाधूममोदिनी ॥
नलिनी नंदनीरंदानंदिनीनंदबालिका । नवीनानर्म
दानर्मौनेमिर्नियमनिश्चया ॥ निर्मलानिगमाचारा
निम्नगानग्निकानिमिः ॥ नालानिरंतरानिघ्नीनिर्लेपा



निर्गुणा नतिः ॥ नीलग्रीवानिरीहाचनिरंजनजनी
नवी ॥ नवनीतप्रियानारीनरकार्णवतारिणी ॥ नारा
यणीनिराकारानिपुणानिपुणाप्रिया ॥ निशानिद्रान
रेंद्रस्थानमितानमितापिच ॥ निर्गुंडिकाचनिर्गुंडानि
र्मांसानासिकाभिधा ॥ पताकिनी पताकाचपलप्रीति
र्यशश्विनी ॥ पीनापीनस्तनापत्नीपवनाशनशा
यिनी॥परापराकलापाकापाकक्रत्यरतिप्रिया॥ पवन
स्थासुपवनातपसिप्रीतिवर्द्धिनी॥ पशुवृद्धिकरीपुष्टिः
पोषणीपुष्पवार्द्धनी ॥ पुष्पिणीपुस्तककरापुन्नागत

प० ४८ | स्तो. ४८

लवासिनी ॥ [illegible] मिनी ॥

पेशापाशकरापाशबंधहापांशुलापशुः॥ पटःपटाशाप
रशुधारिणीपाशिनीतथा॥ पापघ्नीपतिपत्नीचपतिता
पतितापिच ॥ पिशाचीचपिशाचघ्नीपिशिताशन
तोषिता ॥ पानदापानपात्राचपानदानकरो
द्यता॥ पेषाप्रसिद्धिः पीयूषापूर्णापूर्णमनोरथा ॥
पतद्गर्भापतद्गात्रापौनः पुण्यपिवापुरा ॥ पंकिलापं
कमग्नाचपामीपापंजरस्थिता ॥ पंचमीपंचयामा
चपंचतापंचमप्रिया॥ पंचमुद्रापुंडरीकापिंगलापिंग

लोचना ॥ प्रियंगुमञ्जरीपिंडीपंडितापांडुरप्रभा ॥
प्रेतासनाप्रियालुस्थापांडुघ्नीपीतसापहा ॥ फलिनी
फलदात्रीचफलश्रीफणिभूषणा ॥ फूत्कारकारिणी
स्फाराफुल्लफुल्लांबुजासना ॥ फिरंगहास्फीतमतिः
स्फितिःस्फीतिकरीतथा॥ वनमायाबलारातिर्बलिनी
बलवर्द्धिनी ॥ वेणुवाद्यावनचरीवीराविजयिनीअपि॥
विद्याविद्याप्रदाविद्याबोधिनीवेददायिनी ॥ बुधमाता
चबुद्धाच वनमालावतीवरा॥ वरदावारुणीवीणावी
णावादनतत्परा ॥ विनोदिनीविनोदस्थावैष्णवीवि

प्र० ४९

ष्णुवल्लभा ॥ विद्यावैद्यचिकित्साचविवशाविश्वविश्रुता ॥ वितंद्राविह्वलावेलाविरावाविरतिज्वरा ॥ विविधार्ककरावीराबिंबोष्ठीबिंबवत्सला ॥ विंध्यस्थावीरवन्द्याचवरीयानपरावित् ॥ वेदांतवेद्यवैद्याचवेदस्यविजयप्रदा॥विरोधवर्द्धिनीवन्ध्यावन्ध्यावंधनिवारिणी॥भयिनीभगमालाचभवानीभयभाविनी ॥ भीमाभीमाननाभैमीभंगुराभीमदर्शना ॥ भिल्लीभल्लधराभीरुर्भेरुंड्यभिभयापहा ॥ भगसर्पिण्यपिभगाभगरूपाभगालया ॥ भगासनाभगामोदाभेरीभंकाररंजिनी ॥

स्तो० ४९

भीषणाभीषणारावाभगवत्यपिभूषणा ॥ भारद्वाजीभोगदात्रीभवघ्नीभूतिभूषणा ॥ भूतिदाभूमिदात्रीचभूपतित्वप्रदायिनी ॥ भ्रमरीभ्रामरीनीलाभूपालमुकुटस्थिता ॥ मतामनोहरमनामानिनीमोहिनीमही ॥ महालक्ष्मीर्मदक्षीबामदीयमदिरालया ॥ मदोद्धतामदंगस्थामाधवीमधुमादिनी ॥ मेधामेधाकरीमेध्यामध्यामध्यवयस्थिता ॥ मद्यपामांसलामत्स्यमोदिनीमैथुनोद्धता ॥ मुद्रामुद्रावतीमातामायामहिममंदिरा ॥ महामायामहाविद्यामहामारी

४० महेश्वरी ॥ महादेववधूर्मान्यामधुरावीरमण्डला ॥
५० मेदस्विनीमीलदश्रीर्महिषासुरमर्दिनी ॥ मण्डप
स्थामठस्थाचमदिरागमगर्विता ॥ मोक्षदामुण्ड
मालाचमालामालाविलासिनी ॥ मातंगिनीच
मातंगीमतंगतनयापिच ॥ मधुस्रवामधुरसामधूक
कुसुमप्रिया ॥ यामिनीयामिनीनाथभूषायावकरंजि
ता॥यवांकुरप्रियामायायवनीयवनाधिपा॥यमघ्नीयम
कन्याचयजमानस्वरूपिणी ॥ यज्ञायज्वायजुर्यज्वा
यशोनिकरकारिणी ॥ यज्ञसूत्रप्रदाज्येष्ठायज्ञकर्मक





रीतथा ॥ यशस्विनीयकारस्थायूपस्तंभनिवासिनी ॥
रंजितराजपत्नीचरमारेखारवेरणी॥ रजोवतीरजश्चि
त्रारजनीरजनीपतिः॥ रागिणीराज्यनीराज्याराज्य
दाराज्यवर्धिनी ॥ राजन्वतीराजनीतिस्तथारजतवा
सिनी॥ रमणीरमणीयाचरामारामावतीरती॥रेतोव
तीरतोत्साहारोगहृद्रोगकारिणी ॥ रंगारंगवतीरागा
रागज्ञारागकृद्रणा ॥ रंजिकारंजिकारंजारंजिनीरक्त
लोचना॥रक्तचर्मधरारंजारक्तास्यारक्तवादिनी॥रंभारं
भाफलप्रीतिरंभोरूराघवप्रिया ॥ रंगभृद्रंगमधुररोद

सीरोदसीग्रहा ॥ रोधकृद्रोधहंत्रीचरोगभृद्रोगशायि
नी॥वंदी वंदिस्तुताबंधबंधूककुसुमाधरा॥वंदितावंदि
तामाताविंदुराबैंदवीविधा ॥ विंकीविंकपलाविंकाविं
कस्थाविंकवत्सला ॥ वदिर्विलग्नाविप्राचविधिर्विधि
करीविधा ॥ शंखिनीशंखवलयाशंखमालावतीश
मी ॥ शंखपात्राशिनीशंखाशंखाशंखगलाशशी ॥
शंबीशरावतीश्यामाश्यामांगीश्यामलोचना ॥ श्म
शानस्थाश्मशानाचश्मशानस्थलभूषणा ॥ शमदा
शमहंत्रीचशाकिनीशंकुशेखरा ॥ शांतिश्शांतिप्रदा

शेषाशेषस्थाशेषदायिनी ॥ शेमुखीशोषिणी शीरी
शौरिः शौर्याशराशिरिः ॥ शापहाशापहानीशशंपा
शपथदायिनी ॥ श्रृंगिणीश्रृंगपलभुक्शंकरी शंक
रीचया ॥ शंकाशंकापहाशंस्थाशाश्वतीशीतला
शिवा ॥ शिवस्थाशवभुक्तावाशाववर्णाशिवोदरी ॥
शायिनीशावशयनाशिंशपाशिंशपायना ॥ शवकुं
डलिनीशैवाशंकराशिशिराशिरा ॥ शवकांचीशव
श्रीकाशवमालाशवाकृतिः ॥ शयनीशंकुवाशक्तिः
शंतनुःशीलदायिनी ॥ सिंधुःसरस्वतीसिंधुःसुंदरीसुं

५० दरानना ॥ साधुःसिद्धिःसिद्धिदात्रीसिद्धासिद्धसर 
५१ स्वती ॥ संततिःसंपदासंपत्संवित्सुरतिदायिनी॥सप
त्नीसरसासारासरस्वतिकरीस्वधा ॥ सरःसमासमा
नाचसमाराध्यासमस्तदा ॥ समिद्धासमदासंमासं
मोहासमदर्शना ॥ समितिःसमिधासीमासवित्रीस
विधासती ॥ सवनीसवनादारासावनासमरासमी ॥
सिमिरासततासाध्वीसध्रींचित्यसहायिनी ॥ हंसी
हंसगतिर्हंसाहंसोज्ज्वलनिचोलयुक् ॥ हलिनीहल
दाहालाहरश्रीहरवल्लभा ॥ हेलाहेलावतीहेषाह्लेपस्था 

ह्लेषवर्द्धिनी ॥ हंताहंतिर्हताहत्याहाहंततपहारिणी ॥
हंकारीहंतकृद्धंकाहीहाहाताहताहता ॥ हेमप्रदाहंसव
तीहारीहातरिसंमता ॥ होरीहोत्रीहोलिकाचहोमाहो
मोहविर्हारिः ॥ हारिणीहरिणीनेत्राहिमाचलनिवा
सिनी ॥ लंबोदरीलंबकर्णालंबिकालंबविग्रहा ॥
लीलालोलावतीलोलाललनील्वालिताल्लता ॥ लला
मलोचनालोच्यलोलाक्षीलक्षणालला ॥ लंपतीलुंप
तीलंपालोपामुद्राललंतिनी ॥ लंतिकालंबिकालंबा
लघिमालघुमध्यमा ॥ लघीयसीलघुदयील्लताल्लत

निवारिणी ॥ लोमभृल्लोमकोशाचलुलुतीलुलुंसंयती॥
लुलायमथाचलहरीलंकापुरपुरंदरी ॥ लक्ष्मीर्लक्ष्मीप्र
दालक्ष्म्यालक्ष्याबलमतिप्रदा ॥ क्षुण्णाक्षुपाक्षणाक्षी
णाक्षमःक्षांतिःक्षणावती ॥ क्षामाक्षमोदरीक्षीमाक्षौम
भृत्क्षत्रियांगना ॥ क्षयाक्षयाकरीक्षीराक्षीरदाक्षीरसा
गरा ॥ क्षेमंकरीक्षयकरीक्षयतत्क्षणदाक्षतिः ॥ क्षुरं
तीक्षुद्रिकाक्षुद्राक्षुत्क्षामाक्षरपातका ॥१०००॥ मातुः
सहस्रनामेदंप्रत्यंगिरायाःप्रदायकम् ॥ यःपठेत्प्रयतोनि
त्यंसएवस्यान्महेश्वरः ॥ अनाचांतःपठेन्नित्यंदरिद्र

धनदोभवेत् ॥ मूकस्याद्वाक्पतिर्देविरोगीनीरोगतां
भजेत ॥ अपुत्रःपुत्रमाप्नोतित्रिषुलोकेषुविश्रुतम् ॥
वंध्यापिसूतेतनयान्गावश्चबहुदुग्धदाः ॥ राजानःपा
दनम्राःस्युस्तस्यदासाइवस्फुटाः ॥ अरयःसंक्षयंयां
तिमनसासंस्मृता अपि ॥ दर्शनादेवजायंतेनरानार्यो
पितद्वशाः ॥ कर्ताहर्तास्वयंवीरोजायतेनात्रसंशयः॥
यंयंकामयतेकामंतंतंप्राप्नोतिनिश्चितम् ॥ दुरितंनं
चतस्यास्तेनास्तिशोकाःकदाचन ॥ चतुष्पथेर्द्ध
रात्रयःपठेत्साधकोत्तमः ॥ एकाकीनिर्भयोधीरोद

शावर्तस्तवोत्तमम् ॥ मनसाचिंतितंकार्यंतस्यसिध्ये
न्नसंशयः ॥ विनासहस्रनाम्नायोजपेन्मंत्रंकदाचन ॥
नसिद्धोजायतेतस्यमंत्रःकल्पशतैरपि ॥ कुजवारे
श्मशानेचम ्याह्नेयोजपेदथ ॥ शतावृत्त्यासंजायेत
कर्ताहर्तान्नृणामिह ॥ रोगार्त्तोऽर्द्धनिशायांतुपठित्वा
भसिसंस्थितः ॥ सद्योनीरोगतांयातियदिस्यान्निर्भय
स्तदा ॥ अर्द्धरात्रेश्मशानेवैशनिवारेजपेन्मनुम् ॥
अष्टोत्तरसहस्रंतद्दशवारंजपेत्ततः ॥ सहस्रनामचेत्त



द्धितदायातिस्वयंशिवा ॥ महापवनरूपेणघोरगोमा

युनादिनी ॥ तदायदि न भीतिस्यात्ततोदृग्धीतिवा
भवेत् तदापशुवलिंदद्यात्स्वयंगृह्णातिचंडिका ॥ यथे
ष्टंचवरंदत्त्वायातिप्रत्यंगिराशिवा॥रोचनागुरुकस्तूरी
कर्पूरमदचंदनैः ॥ कुंकुमप्रथमाभ्यांतुलिखितंभूर्जप
त्रके ॥ शुभनक्षत्रयोगेतुकृत्रिमाकृतसत्क्रियः ॥ कृत
संतापनांसिद्धिंधारयेद्दक्षिणेकरे ॥ सहस्रनामस्वर्ण
स्थंकंठेवापीजितेंद्रियः ॥ तदायंत्रंनमेन्मंत्रींक्रुद्ध्वेसं
म्रियतेनरः॥यस्मैददातिसस्वस्तिसभवेद्धनदोपमः॥
दुष्टश्वापदजंतूनांनभीःकुत्रापिजायते ॥ बालकाना

१० न्मिमांरक्षांगर्भिणीनामपिध्रुवम् ॥ मोहनस्तंभनाकर्ष स्तो०
५५ मारणोच्चाटनानिच ॥ यंत्रधारणतोनूनंजायतेसाधक
स्यतु ॥ नीलवस्त्रेविलिखितंध्वजायांयदितिष्ठति ॥
तदानष्टाभवत्येवप्रचंडापरवाहिनी ॥ एतज्जप्तंमहाभ
स्मललाटेयादधारयेत ॥ तद्दर्शनतएवस्युः प्राणिन
स्तस्यकिंकराः ॥ राजपत्न्योपिवशगाः किमन्याः
परयोषितः ॥ एतज्जप्तंपिबेत्तोयंमासैकेनमहाकविः॥
पंडितश्चमहादक्षोजायतेनात्रसंशयः ॥ शक्तिसंपूज्य ५५
देवेशिपठेत्स्तोत्रंवरंशुभम् ॥ इहलोकेसुखंभुक्त्वा

परत्रत्रिदिवंजयेत ॥ इतिनामसहस्रंतुप्रत्यंगिरामनो
हरम् ॥ गोप्यंगुप्ततमंलोकेगोपनीयंस्वयोनिवत् ॥
इति श्रीरुद्रयामलतंत्रेदशविद्यारहस्येप्रत्यंगिराहसह
स्रनामसंपूर्णम् ॥ ॐ अस्य श्रीप्रत्यंगि
रास्तोत्रमंत्रस्य महादेवऋषिः ॥ अनुष्टुप्छंदः
प्रत्यंगिरादेवता ॥ ह्रींबीजंस्वाहाशक्तिः स्फेंकीलक
म् ॥ ममाभीष्टसिद्ध्यर्थेजपेविनियोगः ॥ मंदरस्थं
सुखासीनंभगवंतंमहेश्वरम् ॥ समुपागम्यचरणौपार्व
तीपरिपृच्छति ॥ पार्वत्युवाच ॥ धारिणीपरमाविद्या

प्रत्यंगिरामहोदया ॥ नरनारीहितार्थायबालानांरक्ष णायच ॥ राज्ञांमांडलिकानांचदीनानांचमहेश्वर ॥ विदुषांचद्विजातीनांविशेषेणार्थसाधिनी ॥ उत्कृष्टा परमादेवीप्रत्यंगिरामहोत्तमा ॥ महाभयेषुघोरेषुवि द्युदग्निभयेषुच ॥ व्याघ्रदंष्ट्राकराघातेनदीनदसमु द्रके ॥ अभिचारेषुसर्वेषुसंग्रामेराजपीडिते ॥ सौभा ग्यजननीनित्यंनृणांवश्यकरीतथा ॥ तांविद्यांभोसुर श्रेष्ठकथयस्वममप्रभो ॥ पठितापाठितादेवीसर्वसि द्धिकरीसदा ॥ यस्यांगस्था महाविद्या प्रत्यंगिरा



शिवोदिता ॥ तांविद्यांभोःसुरेशानकथयस्वमयि प्रभो ॥ श्रीभैरव उवाच ॥ साधुसाधुमहाभागेजंतू नांहितकारिणी ॥ वचनांतेसुरासिद्धिंकथयामिनसं शयः ॥ देवीप्रत्यंगिराविद्यादुष्टग्रहविनाशिनी ॥ मर्दिनीसर्वदुष्टानांसर्वपापप्रमोचिनी ॥ स्त्रीबालप्रभृ तीनांचजनानांहितकाम्यया ॥ सौभाग्यजननीदेवी बलपुष्टिकरीतथा ॥ चतुष्पथेषुगोष्ठेषुतथागोष्ठवनेषु च ॥ श्मशानेदुर्गमेघोरेसंग्रामेशत्रुसंकटे ॥ गुह्येप्य शुचिस्थानेषुसंग्रामेशत्रुसंकटे ॥ राजद्वारेचदुर्भिक्षम

हाभयउपस्थिते ॥ पठितापाठितादेवीसर्वसिद्धिकरी स्मृता ॥ यस्यात्मस्थामहाविद्याप्रत्यंगिरासुभाषिता ॥ सिद्धासुसिद्धासानित्याविधेयापरमास्मृता ॥ श्रीमताघोररूपेणभाषिताघोररूपिणी ॥ यस्यांगस्थामहाविद्याविचिंत्याधारितेतरैः ॥ लिखितांच करेकंठेबाहौशिरसिधारयेत् ॥ विमुच्यतेमहाघोरेमृत्युरूपेदुरासदे ॥ दुष्टसत्त्वग्रहादेवयक्षरक्षादयस्तथा ॥ पीडांतस्यनकुर्वंतियेचान्येपीडकाग्रहाः ॥ मंत्राबाह्याभिचाणप्रवर्ततेकदापि न ॥ नित्यंधारय

माणस्य अमृतत्वंचकल्पयेत् ॥ योधारयेद्योगयुक्तस्तस्यरक्षाभवेत्सदा ॥ सिद्धार्थासिद्धिदानित्यं विधेयंपरमास्मृता ॥ प्रत्यंगिराक्षराप्रोक्तारिपुंहन्यान्नसंशयः ॥ हरिचंदनमिश्रेणरोचनाकुंकुमेनच ॥ लिखित्वाभूर्जपत्रेतुधारणीयासदानृभिः ॥ पुष्पैर्धूपैर्विचित्रैश्चबल्युपाहारपूजनैः ॥ पूजयित्वायथान्यायं शीतकुंभेनवेष्टयेत् ॥ धारयेद्यइमान्मंत्राँ ल्लिखितान् रिपुनाशकान् ॥ विलयंयातिरिपवः प्रत्यंगिराविधारणात् ॥ पूजयित्वायथान्यायंसितसूत्रेणवेष्टयेत् ॥

धारयेद्यइमांविद्यांनिश्चितंरिपुनाशनीम् ॥ रिपवोवि
लयंयांतिप्रत्यंगिराप्रधारणात् ॥ यंयंस्पृशतिहस्तेन
यंयंस्वादतिजिह्वया ॥ अमृतत्वंभवेत्तस्यमृत्युर्नास्ति
कदाचन ॥ कर्मणो योजपेद्वास्तुकृत्रिमंदारुणंसदा॥
भक्षितंजरयत्याशुतरसातस्यसुव्रते ॥ तथास्योव्यग्र
मानायांजीर्यतीनात्रसंशयः । मंत्रराजोह्ययंदेविसर्व
सिद्धिकरःस्मृतः॥ सर्वमंत्रविनाशीचगोलगुह्यंतरंम
या ॥ सर्वविघ्नहराविद्याप्रत्यंगिरामहेश्वरी ॥ गोल
कस्यप्रभावेनप्रत्यंगिराप्रभावतः ॥ त्रिपुरश्चमयाद



ग्धइमांविद्यांचबिभ्रता ॥ निर्जिताश्चासुराः सर्वैर्देवै
र्विद्याभिमानतः ॥ गोलकंसंप्रवक्ष्यामिभेषज्यानि
चसुव्रते ॥ कांतामदनकंचैवरोचनाकुंकुमंतथा ॥
अरुक्करंशिखारिष्टंसिद्धार्थामालतीतथा ॥ एतद्द्र
व्यगणंभद्रेगोलगर्भेतिधापयेत् ॥ धारयेत्सततंमंत्रंसा
धकोमंत्रवित्सदा । गोलकंकेलिकंकृत्वाभेषजायच
सुव्रतः ॥ आयुष्करंसुखकरंसिद्धार्थोमालतीतथा ॥
संभृतंधारयेन्मंत्रंसाधकोमंत्रवित्सदा ॥ अभिधांसंप्र
वक्ष्यामिप्रत्यंगिरासुभाषिताम् ॥ दिव्यैर्मंत्रपदैश्चित्रैः

सुखोपायैः सुखप्रदैः ॥ पाठेरक्षा विधानेन मंत्रराजः प्रकीर्त्तितः ॥ अथातोमंत्रपादानिसंप्रवक्ष्यामि यत्नतः ॥ ॐअस्यश्रीप्रत्यंगिरामंत्रस्य ॥ श्रीभगवान्भैरवशंकर ऋषिः अनुष्टुबादिनानाछंदांसि ॥ श्रीजगन्माताप्रत्यंगिरादेवता ॐबीजंम ॥ जुंशक्तिःसः कीलकम् ॥ ममसर्वार्थसिद्ध्यर्थेजपेविनियोगः ॥ ॐ नमःसहस्रसूर्येक्षणायमहासुखाय अनादिरूपाय पुरुहस्तायमहामखायमहाव्याघ्रायिनेमहाघोरातिघोरायमहाप्रभावंदर्शय ॐहिलिहिलि ॐमिलिमिलि

ॐहरिहरि ॐ विद्युज्जिह्वे ज्वल ज्वल प्रज्वल प्रज्वल बंध बंध मथमथ प्रमथ प्रमथ प्रध्वंसय शमय शमय पिब पिब ग्रस ग्रस नाशय नाशय वद वद द्रावय द्रावय विद्रावय विद्रावय छिंधि छिंधि कृंतय कृंतय भक्षय भक्षय त्रासय त्रासय ताडय ताडय विदारय विदारय भ्रामय भ्रामय कुलं कुलं भुंज भुंज भंज भंज चुंब चुंब दह दह गर्ज गर्ज स्फोटयास्फोटयचुरयचुरयउत्सादयउत्सादय मोहय मोहय उन्मूलयउ

न्मूलयसंकोचयसंकोचय आवेशय आवेशयमम विपदंनाशयनाशय विषंनाशयनाशय शत्रूंस्त्रासय त्रासय विदारय विदारय मांरक्षत्वम् ॥ अतः परंस्वशरीरनामोच्चर्य्य ॥ ॐ आद्याक्षरमहायोग पुरुषरसत्यांमांधारकंसपरिवारकं रक्षरक्ष महामेघौघघातिके महामेघौघघातिके महामेघौघादिसंवर्त्तकसंवर्त्तके विद्युद्भातविद्युत्कांतिविद्युद्दंतक कपार्दनीदिव्यकनकांभोरुहे कपर्द्दिनिदिविकनकांभोरुहविकचमुंडमालाधारिणी शितकंठव्याघ्राजि



निकुक्कुटिपरमेश्वरप्रिये छिंधि छिंधि विद्रावयविद्रावयंविदारयविदारयदेवपिशाचनागारुण्डकिन्नरविद्याधरगणगंधर्वयक्षराक्षसलोकपालान् ग्रहान्स्तंभय नाकलोकपालांश्चहनहन अत्रस्थलेशत्रुनामोच्चारणं कृत्वा येममशत्रवस्तान्हनय हनय ममशत्रवस्तान्निकृंतयनिकृंतय येचसदा ममविद्यायामविद्यायाम विद्याकर्म कुर्वीत तेषांविद्यांस्तंभयस्तंभयकीलयकीलयघातयघातयॐविश्वमूर्त्तयेमहातेजसे२ॐजुंसः॥ ममशत्रूणांमुखंस्तंभयस्तंभय॥ ॐजुंसः॥'ममशत्रूणां

गुह्यंस्तंभयस्तंभय॥ॐ जुंसः॥ममशत्रूणांविद्यांस्तंभय स्तंभय॥ॐ जुंसः॥ममशत्रूणांहस्तौस्तंभयस्तंभय ॥ ॐ जुंसः ॥ ममशत्रूणांपादौगुह्यखगध्वनिमर्माणिस्तं भयस्तंभय ॥ ॐ जुंसः ॥ ममशत्रूणांपादौस्तंभ यस्तंभय ॥ ॐजुंसः ॥ ममशत्रूणांविश्वस्यस्तंभय स्तंभय ॥ ॐजुंसः ॥ ममशत्रूणांनेत्रेस्तंभयस्तंभय ॥ ॐजुंसः॥ममशत्रूणाश्रोत्रस्तंभयस्तंभय॥ॐजुंसः॥ म मशत्रूणांगृहांत्रकुटुंबंस्तंभयस्तंभय स्थानंकीलयकी लय मुंडंकीलयकीलयदेहंकीलयकीलयनाभिंकीलय



कीलयमंडलंकीलयकीलय सर्वदेहंकीलय कीलयॐ सर्वसिद्धिभागेमहाभागस्यस्वशरीरनामोच्चारणंकृत्वा ममधारकस्य सपरिवारकस्यशांतिकुरुकुरु सपरिवा रस्यरक्षांकुरुकुरुस्वाहा ॐॐॐ रंरंरंहूंहूंहूंफट्स्वाहाॐ ॐॐॐॐयंयंयंयंरंरंरंरंलंलंलंलंलंवंफट्स्वाहाॐठः ॐठःॐठॐफट् ॐप्रत्यंगिरेममधारकंसपरिवारकंर क्षरक्षॐययःॐॐॐह्रींफट्स्वाहा ॐममधारकस्यश त्रून्हनहन धमधम सर्वदुष्टांस्त्रासयत्रासयॐॐॐह्रां ह्रांह्रांह्रष्टाकरालीममतन्नविषशस्त्राभिघातंसर्वोपद्रवा

दियेनकृतं कारितं कारयति कारयिष्यतिवातान्स
र्वान् हनहन पचपच प्रत्यंगिरेरक्षरक्षत्वंमांधारकंसप
रिवारकं रक्षरक्ष स्वाहा विद्यानामुत्तमाविद्यापठितापा
ठितानरैः॥लिखिताचकरेकंठेबाहेशिरसिधारयेत्॥ मु
च्यतेसर्वपापेभ्योनाल्पमृत्युःकदाचन ॥ ग्रहायक्षास्त
थासिद्धादेवराक्षसपन्नगाः॥ तस्यपीडांनकुर्वंतिदेविभू
म्यंतरिक्षगाः ॥ प्राप्नोतिवसुधांसर्वारिपुहस्तगताश्रि
यम् ॥ वशेस्तिष्ठंतितत्रैवशत्रवः प्राणहारकाः ॥ भवं
तिवशगास्तस्यसौंदर्यप्रियदर्शनात ॥ अभ्यास्यतां

यांति विद्याः सिद्धिदेवव्याः प्रभावतः ॥ चराचरमिदं
सर्वंसशैलवनकाननम् ॥ नरनारीसमाकीर्णंसाधक
स्यनसंशयः॥ सर्वंचवशतांयतिजपमानस्यनित्यशः॥
अथनवशक्तीस्मृत्वाशत्रून्मारयतेक्षणात् ॥ इदंसत्यं
मयाप्रोक्तंनान्यथागिरिनंदिनि ॥ इतिश्रीरुद्रयामल
तंत्रे ईश्वर पार्वतीसंवादेप्रत्यंगिरास्तोत्रंसमाप्तम् ॥
श्रीरस्तुआयुष्यमस्तु ॥

---

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मजेन
गङ्गाविष्णुश्रेष्ठिना स्वकीये "लक्ष्मीवेङ्कटेश्वर"
मुद्रणालये मुद्रयित्वा प्रकाशितम् ।
संवत् २०१४, शके १८७९

---

पुस्तक मिलनेका ठिकाना–

| गङ्गाविष्णु श्रीकृष्णदास, | खेमराज श्रीकृष्णदास, |
|---|---|
| 'लक्ष्मीवेङ्कटेश्वर' स्टीम्–प्रेस, | 'श्रीवेङ्कटेश्वर' स्टीम्–प्रेस, |
| कल्याण–बम्बई. | खेतवाड़ी–बम्बई. |

मुद्रक और प्रकाशक—
**खेमराज श्रीकृष्णदास,**
अध्यक्ष—" श्रीवेंकटेश्वर " स्टीम्-प्रेस, बम्बई.